भुवर्लोकं स्वर्लोकं जनलोकं तपोलोकं सत्यलोकं चातलवितलसुतलतलातलमहातलरसातलपातालं ब्रह्माण्डं च विसृजेत् । दण्डमाच्छादनं कौपीनं परिगृहेत् शेषं विसृजेत् । ब्रह्मचारी गृहस्थो वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च शरीराग्नौ समारोपयेत् । उपवीतं भूमौ वा ऽप्सु वा विसृजेत् । दण्डान् लोकाग्नीन् विसृजेदिति होवाच । अत ऊर्द्ध्वममन्त्रवदाचरेदूर्द्ध्वं गमनं विसृजेत् । त्रिसन्ध्यादौ स्नानमाचरेत् । सर्वेषु देवेष्वाचरणमावर्तयेदुपनिषदमावर्तयेत् । इति, ।

नैतदपि कर्माधिकारिणां शिखायज्ञोपवीतादित्यागे मानं परं तु पूर्वोक्तरीत्या सर्वथाऽऽत्मनिष्ठानां ब्रह्माण्डत्यागिनां स्वतःसिद्धं कर्माभावमनुवदत्येव न तु विधित्सति । सिद्धेऽर्थे विधिव्यापारासम्भवात् ।

अत एव पिप्पलादशाखिनः ।

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्वदर्शिवान् ॥
बहिःसूत्रं त्यजेद्विद्वान् योगसूत्रं समास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ॥
धारणादस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वान्नेतरैः केशधारणैः ।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैरिधार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥
इदं यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान् यज्ञोपवीती स्याद् यज्ञास्तं यज्वनं विदुः ॥ इति,

स्पष्टमिह ज्ञानमयशिखायज्ञोपवीतानामात्मनिष्ठानामेव यतीनां बाह्यं शिखायज्ञोपवीतादि नावश्यकं, ये तु पुनर्व्यवहारिणो द्रविडनस्तेषां त्वकारणं दम्भमात्रेण त्यजतां भवेदेव भ्रंशः । एवमेव विशिष्टाधिकारिणमुद्दिश्य विश्वामित्रः । अथापरं परिव्राजकलिङ्गं सर्वतः परिमोचमेके सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । शिखायज्ञोपवीतकमण्डलुकपालानां त्यागी—इति, अमुमेवार्थं संवदति बोधायनोऽपि अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा । वैणवं दण्डमादत्ते सखा मे गोपाय ॥ इति, व्यासस्मृतावपि ।

यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः ।
उपकुर्वाणकात्पूर्वं यतो लोके न दृश्यते ॥

यावत्कर्माणि कुरुते तावदेवास्य धारणम् ।
तस्मादस्य परित्यागः क्रियते कर्मभिः सह ॥
अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् ।
यथा च मेखलादीनि गृहस्थाश्रमवाञ्छया ॥
पत्नीयोऽकूर्वं यथेष्टान्ते सोमान्ते च यथा ग्रहान् ।
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः ॥ इति,

तदिदं वचनजातं पूर्वोपदर्शितश्रुतिस्मृतिपुराणवाक्यानुरोधेन वक्ष्यमाणश्रुतिस्मृत्यनुरोधेन च क्षत्रियादिपरं वा ऋभुजडभरतदत्तात्रेयाद्यात्मनिष्ठविशिष्टाधिकारिपरं वेति लोकसङ्ग्रहाय वाऽज्ञानेन वाऽऽलस्येन वा शिखायज्ञोपवीतादित्यागो नाचार्यैव केवलमिति वैदिकः पन्थाः । वस्तुतस्तु जडभरतादेरपि यज्ञोपवीतमभूदित्यग्रे वदिष्यामः । इदमप्यवधेयं चतुर्ष्वप्याश्रमेषु यथाधिकारं वेदानां तत्तदंशावृत्तिरावश्यकीति तस्या उपवीताचमनादिपूर्वकतया यज्ञोपवीतं न्याय्यमिन्यावश्यकं त्यागवचनानां तु ज्ञाननिष्ठा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः इति पैप्पलादश्रुत्याद्यनुसारेण विशिष्टाधिकारिपरतया वा ज्ञानप्रशंसामात्रपरतया वोपपत्तौ नार्थानुष्ठापकता अत एव स्मृतिः ।

यदा तु विदितं तत्स्यात् परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत् ॥

इति ब्रह्मनिष्ठस्यैव उत्सृष्टसर्वव्यवहारस्य विशिष्टाचारं बोधयति न तु साधनावस्थस्य । यज्ञोपवीतं नाच्छादनं चरति परमहंसः । अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमादधीत इति श्रुत्योस्तु ।

किमस्य यज्ञोपवीतं का शिखा कथं वास्योपस्पर्शनम् ।

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वान्नेतरैः केशधारिभिः ।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
एभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥
इद यज्ञोपवीतं तु परमं यत्परायणम् ।
विद्वान् यज्ञोपवीती स्याद् यज्ञास्तं यज्वनं विदुः ॥ इति,

स्पष्टमिह ज्ञानमयशिखायज्ञोपवीतानांमात्मनिष्ठानामेव यतीनां बाह्यं शिखायज्ञोपवीतादि नावश्यकं, ये तु पुनर्व्यवहारिणो दण्डिनस्तेषां त्वकारणं दम्भमात्रेण त्यजतां भवेदेव भ्रंशः । एवमेव विशिष्टाधिकारिणमुद्दिश्य विश्वामित्रः । अथापरं परिव्राजकलिङ्गं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । शिखायज्ञोपवीतकमण्डलुकपालानां त्यागी—इति, अमुमेवार्थं संवदति बौधायनोऽपि अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा । वैष्णवं दण्डमादत्ते सखा म गोपाय ॥ इति, व्यासस्मृतावपि ।

यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः ।
उपकुर्वाणकात्यर्थे यतो लोके न दृश्यते ॥

यावत्कर्माणि कुरुते तावदेवास्य धारणम् ।
तस्मादस्य परित्यागः क्रियते कर्मभिः सह ॥
अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् ।
यथा च मेखलादीनि गृहस्थाश्रमवाञ्छया ॥
पत्नीयोक्त्रं यथेष्ट्यन्ते सोमान्ते च यथा ग्रहान् ।
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः ॥ इति,

तदिदं वचनजातं पूर्वोपदर्शितश्रुतिस्मृतिपुराणवाक्यानुरोधेन वक्ष्यमाणश्रुतिस्मृत्यनुरोधेन च क्षत्रियादिपरं वा ऋभुजडभरतदत्तात्रेयाद्यात्मनिष्ठविशिष्टाधिकारिपरं वेति लोकवञ्चनाय वा अज्ञानेन वाऽऽलस्येन वा शिखायज्ञोपवीतादित्यागो नार्यायैव केवलमिति वैदिकः पन्थाः। वस्तुतस्तु जडभरतादेरपि यज्ञोपवीतमभूदित्यग्रे वदिष्यामः। इदमप्यवधेयं चतुर्ष्वाश्रमेषु यथाधिकारं वेदानां तत्तदंशावृत्तिरावश्यकीति तस्या उपवीताचमनादिपूर्वकतया यज्ञोपवीतं न्यासिनोऽप्यावश्यकं त्यागवचनानां तु ज्ञाननिष्ठा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः इति पैप्पलादश्रुत्याद्यनुसारेण विशिष्टाधिकारिपरतया वा ज्ञानप्रशंसामात्रपरतया वोपपत्तौ नार्थानुष्ठापकता अत एव स्मृतिः ।

यदा तु विदितं तत्स्यात् परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत् ॥

इति ब्रह्मनिष्ठस्यैव उत्सृष्टसर्वव्यवहारस्य विशिष्टाचारं बोधयति न तु साधनावस्थस्य । यज्ञोपवीतं नाच्छादनं चरति परमहंसः । अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमादधीत इति श्रुत्योस्तु ।

किमस्य यज्ञोपवीतं का शिखा कथं चास्योपस्पर्शनम् ।

इदमेवास्य यज्ञोपवीतं यदात्मध्यानं विद्या शिखा इति कौषीतकि-ब्राह्मणे प्रश्नोत्तररूपेणाम्नाततया तदेकवाक्यत्वेन स्फुटमेवार्थवाद-रूपतेत्यतिस्वच्छम् ।

अयमत्र स्फुटार्थसंग्रहः—येषु वाक्येषु वैणवैकदण्डधारण-मुक्तं तत्र तेषां वाक्यानां धर्मिविशेष्यपरत्वं तेषां ब्रह्माण्डपुराणे वैणवैकदण्डधारणस्य धर्म्यत्वाभिधानात् । यत्र शिखायज्ञोपवीतादि-त्याग उच्यते तत्र प्रशंसायै ज्ञानशिखत्व ज्ञानयज्ञोपवीतत्वं चोच्यते कदाचित्तु यज्ञोपवीतत्यागवचनानां पुरातनयज्ञोपवीतत्यागतात्पर्य-कत्वं यथाऽऽह स्मृतिः । नखानि निकृत्य पुराणं वस्त्रं यज्ञोपवीतं कमण्डलुं त्यक्त्वा नवानि गृहीत्वा ग्रामं प्रविशेत् ॥ इति,

अत एव तु—हारीतः—

चत्वार आश्रमा ह्येते संध्यावन्दनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोधनाः ॥

एवमेव स्मृत्यन्तरम् ।

सायं प्रातः सदा संध्यां ये विप्रा नो उपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ॥ इति,

बौधायनश्च—

अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
संध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ॥ इति,

अत्रिश्च—

यज्ञोपवीतं सर्वेषां द्विजानां मुक्तिसाधनम् ।
परित्यजन्ति ये मोहान्नरा निरयगामिनः ॥

पाद्मेऽपि ।

शिखायज्ञोपवीतेन त्यक्तेनासौ कथं द्विजः ॥ इति,

मनुश्च—

सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः । इति, यत्र नैष्कर्म्यं प्रतीयते तत्र जडभरतादीनां महाभागवतानामनवरतब्रह्मचिन्तानां स्वतः सिद्धकर्माभावानुवादमात्रं न तु तत्तात्पर्यकत्वं तस्येति, तदिदमग्रे विवेचयिष्यामः । प्रकृतमनुसरामः । एकदण्डि-त्रिदण्डिभेदेन पूर्वं द्वैविध्यमभ्यधायि न्यासिनां तत्र त्रिदण्डपक्षो मुख्यो-ब्राह्मणानामेकदण्डस्त्वनुकल्पो यथाह मेधातिथिः ।

यावन्न स्युस्त्रिदण्डास्तु तावदेकेन पर्यटेत् ॥ इति,

हारीतश्च तथा ।

नष्टे जलप्रविष्टे वा त्रिदण्डे वा प्रमादतः ।

एकं तु वैणवं दण्डं पालाशं वैल्वमेव वा ॥

गृहीत्वा विचरेतावद् यावल्लभ्येत त्रिदण्डकम् ॥ इति,

एतेन त्रिदण्डविधायकवाक्यानां परमहंसव्यतिरिक्तबहूदकादिपरत्वं व्यवस्थापयन्तो माधवाचार्याः प्रत्युक्ताः ।

शिखिनस्तु श्रुताः केचित् केचिन्मुण्डाश्च भिक्षुकाः ।

चतुर्था भिक्षुकाः प्रोक्ताः सर्वे चैव त्रिदण्डिनः ॥

इत्यविशा, सर्वेषामाश्रमिणां क्रमेण लक्षणमभिदधता । त्रिदण्डेन यतिश्चैव इति त्रिदण्डं यतिलक्षणं पुरस्कृत्य यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती नै चाश्रमी इति प्रायश्चित्तमुक्तमेकदण्डमनाश्रमितावप्रयोजकमित्याचक्षाणेन दक्षेण च स्पष्टं त्रिदण्डपक्षस्यैव पारमहंस्येऽपि पुरस्कृतत्वात् । अत एव त्वेकमुख्येन हारीतदत्तात्रेयपितामहाः कुटीचकादींश्चतुरोऽप्युपन्यस्य बाह्यान्तरवृत्तिभेदेन परस्परं भिन्नानामपि तेषां सर्वेषां त्रिदण्डग्रहणमेव साधारणं लिङ्गमामनन्ति ।

वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजा ।
लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम् ॥ इति,

यदप्येषं बहूदकस्यैव वैविध्यमाख्याय तत्परत्वेन त्रिदण्डग्रहणव्यवस्थापनं माधवाचार्याणां तदपि रभसादेव शिखिनो कुटीचकबहूदकौ, मुण्डो हंसपरमहंसौ चाभिप्रेत्य विदधत्सु ।

शिखिनस्तु स्मृताः केचित्केचिन्मुण्डाश्च भिक्षुकाः ।
चतुर्धा भिक्षुकाः प्रोक्ताः सर्वे चैव त्रिदण्डिनः ॥

इत्यादिवचनेषु कुटीचकबहूदकहंसपरमहंसभेदभिन्नानां सर्वेषां त्रिदण्डधारणस्याम्नातत्वेन मेधातिथिहारीताभ्यामेकदण्डस्य त्रिदण्डालाभपरत्वेन कण्ठतः व्याख्यानाच्च त्रिदण्डवचनानां सामान्यपराणां कुटीचकबहूदकमात्रपरत्वव्यवस्थापनस्य सर्वथा अन्याय्यत्वात् अत एव तु ।

परं परमहंसस्तु तुर्याख्यं श्रुतिरब्रवीत् ।
यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत् ॥ इति

स्पष्टं परमहंसस्य दण्डत्रयधारणाभिधानम् । यथा चेह । दण्डत्रयपदेन वाग्दण्डादित्रयमभिप्रेतुं न शक्यं तथा पूर्वमेवावूमहि पराक्रमिष्यामश्चामुं विषयमग्रेऽप्य हंसडिम्भकोपाख्यानप्रकरणनिर्णयावसरे यत्र दुर्वासःप्रभृतिपरमहंसानां वैणवत्रिदण्डधारणं सुव्यक्तमुक्तमावेदयिष्यते । एतेन यो हि बहूदक एव सन् ग्रामैकरात्रादिकां हंसवृत्तिमाचरति स स्ववृत्तितो हंसो भवति वेदान्तश्रवणादिकां परमहंसवृत्तिं चेदाश्रयति तदा वृत्तितः परमहंसो भवति तेषां हंसादीनां त्रिदण्डमेव लिङ्गम् अनेनैवाभिप्रायेण वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजा इति, अन्यथा मुख्ययोर्हंसयोरेकदण्डविधायकान्युदाहृतानि वचनानि निर्विषयाणि स्युः तस्मादेक एव दण्डः परमहंसस्य इति

तु पराशरमाधवीयमसांप्रतम् । वृत्तिभेदेन बहूदकवैविध्यस्याशाचनिकत्वेन तथोपकल्प्य वचनकदर्थनस्यान्याय्यत्वात्, न हि वृत्तिभेदेन बहूदक एकोभिन्द्यान्नेतरे इति स्मार्त्तीयनियमः । ततश्च वृत्तिभेदभिन्नत्वं चतुर्विधभिक्षुसाधारणमिति । नैव लिङ्गेन ते द्विजाः । इति सावधारणमेकलिङ्गमनुमन्यमाना सर्वेषां परमहंसपर्यन्तानां त्रिदण्डिनां सुव्यक्तमवगमयतीति नाव्यक्तं मीमांसकानाम् । परमहंसमुद्दिश्यैकदण्डधारणधर्म्यत्वाभिधानपरश्रुतिस्मृतिवाक्यानां तु ज्ञानात्मकैकदण्डपरत्वमिति सुव्यक्तम् । ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । इति ज्ञानशिखा ज्ञाननिष्ठा* ज्ञानयज्ञोपवीतिनः इत्यादिपैप्पलादश्रुतौ च ज्ञानस्यैव श्रेष्ठाधिकारिणः सर्वात्मकत्वाभिधानेन ज्ञानात्मकैकदण्डपरत्वात् । अत एव तु भगवान् व्यासः ।

त्रिदण्डस्य परित्याग एकदण्डस्य धारणम् ।
एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता ॥ इति

स्पष्टं वैणवत्रिदण्डापेक्षया ज्ञानात्मकैकदण्डेऽभ्यर्हितत्वमभिदधौ । न चेह वैणवत्रिदण्डापेक्षया वैणवैकदण्डेऽभ्यर्हितत्वबुबोधयिषया तथाऽभिधानमेकदण्डस्यानेकस्मृतिष्वनुकल्पतायाः पूर्वमेवावेदितत्वात् ।

यदपि सर्वे चैव त्रिदण्डिनः इति वाग्दण्डादिविषयं न तु यष्टिविषयाभिप्रायम् । तथा च मनुः ।

वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता बुद्धौ त्रिदण्डीति स उच्यते ॥

* ज्ञानस्य चास्ति सर्वकर्मापेक्षं प्राशस्त्यं किमु न त्रिदण्डमपेक्ष्य यथाह भगवान् स्वयम् । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । इति ।

त्रिदण्डमेतन्निक्षिप्य सर्वभूतेषु मानवः ।
कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छति ॥ इति,

दक्षोऽपि ।

वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते ॥

एतेषां च त्रयाणां दण्डानां स्वरूपं स एवाह ।

वाग्दण्डो मौनता प्रोक्ता कर्मदण्डस्त्वनीहता ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते ॥ इति,

माधवाचार्यः । तदिदमप्यनवधानाभिधानम् ।

शिखिनस्तु स्मृताः केचित् केचिन्मुण्डाश्च भिक्षुकाः ।
चतुर्द्धा भिक्षुकाः प्रोक्ताः सर्वे चैव त्रिदण्डिनः ॥

इति स्मृतौ शिखित्वमुण्डित्वादिलक्षणबाह्यभेदभिन्नानां तेषां चतुर्णां बाह्येनैव वैष्णवत्रिदण्डलक्षणधर्मेण साम्यस्य सर्वे चैव त्रिदण्डिनः इत्यनेन विवक्षितुमुचितत्वात् ।

अत एव चतुर्णामपि न्यासिनां वैष्णवत्रिदण्डलक्षणसामान्यलिङ्गवत्तामभिप्रयन् हारीतः ।

चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः ।
तेषां पृथक्पृथग्ध्यानं वृत्तिभेदात्कृतं च तत् ॥
कुटीचको बहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परमहंसो यो यः पश्चात् स उत्तमः ॥ इति

वैष्णवत्रिदण्डलक्षणसामान्यलिङ्गवत्त्वेऽपि तेषां पार्थक्येन ध्यानहेतुं वृत्तिभेदमाह तत्कृतमेव च तेषां न्यूनाधिकभावमभिप्रैति,

न त्वेकयष्टिर्विप्रियष्टिधारणमावप्रयुक्तं माधवोदितं तेषां ज्येष्ठकनिष्ठभावं पुरस्क्रियेतीनि किमिहास्थाने सिंहविक्रान्तेन।

मैत्रायणीयश्रुतौ तु परमहंसमुपक्रम्य

इन्द्रस्य वज्रोऽसीति वीन् वैणवान् दण्डान् दक्षिणपाणौ धारयेदेकं वा यदोक्तं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतम्। इति स्पष्टमेव वैणवत्रिदण्डग्रहणमाम्नायते। एकदण्डस्तु त्रिदण्डालाभलक्षणापदीति पूर्वमेव स्मृतिं पुरस्कृत्य व्यवातिष्ठिपाम।

न च कुटीचकादि तात्पर्येण त्रिदण्डो विधीयते एकदण्डस्तु परमहंसमभिप्रेत्य अत एव तु व्यवस्थार्थं वापदोपादानमिति वाच्यम्। अथ श्रुतौ यदोक्तं तदा इति पदोपसंदानमाहात्म्येन एकस्यैव परमहंसस्योपकरणसंपत्तद्विरहलक्षणापत्कालभेदेन त्रिदण्डैकदण्डधारणतात्पर्यकतया एव युक्तत्वादितरथा कुटीचकादेस्त्रिदण्डाधिकारित्वे परमहंसस्य चैकदण्डधारित्वे पृथग्बुबोधयिषिते उभयोर्व्याप्यवृत्तित्वेन कालिकाव्याप्यवृत्तित्वार्थकदाप्रत्ययघटिततदापदोपबृंहितस्य यदोक्तं तदा सशिखं वपनं कृत्वा इत्याद्यभिधानस्य सर्वथाऽसांगत्यापत्तेः। यदि तु दण्डित्वसामान्यावच्छिन्नस्योभयाधिकारित्वेनाव्याप्यवृत्तितया दाप्रत्ययघटितप्रयोगयोग इति वदसि तदाऽपि त्रिदण्डैकदण्डाधिकारितावच्छेदकरूपभेदेन नैको दूषमर्हतीति सद्रोपसादयस्यमिति श्रुत्यक्षरस्वारस्याभिज्ञाः। वापद तु व्यवस्थार्थकम्।

त्रिदण्डपक्षस्य मुख्यत्वं ज्योतिर्विदामप्यविप्रतिपन्नमत एव प्रज्ञिशिरोमणेः गुरुर्योगेन त्रिदण्डग्रहणलक्षणन्यासं ते वदन्ति तथा हि वृहज्जातकभट्टोत्पल्यां सत्याचार्याः।

तेष्वधिकबली जीवस्त्रिदण्डिनं भार्गवश्चरकमुख्यम् ।
नग्नश्रमणं सौरो बुधस्तदाजीविकाचार्यम् ॥ इति,

केचित् पक्षपातलम्बिनः त्रिदण्डैकदण्डपक्षयोर्वैकल्पिकत्व-माहुः प्रमाणयन्ति च स्मृतिवचनानि, यथाऽऽह व्यासः ।

त्रिदण्डमेकदण्डं वा व्रतमास्थाय तत्त्ववित् ।
पर्यटेत्पृथिवीं नित्यं वर्षाकाले स्थिरीभवेत् ॥ इति,

शौनकश्च अथ काषायवासाः सखा मा गोपायेति ।
त्रिदण्डमेकदण्डं वा गृह्णाति ॥ इति,
आश्वमेधिके भगवान् कृष्णः ।

एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा ।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर ! इति,

विष्णुबौधायनावपि ।

एकदण्डी भवेद्वापि त्रिदण्डी वा मुनिर्भवेत् ॥ इति,

तदिदमप्यनवहितैकचोद्यम् । स्मृतिकारैरेवैकदण्डग्रहणस्य त्रिदण्डालाभलक्षणापदि व्यवस्थापनेन प्रमाणपरतन्त्राणां तथैवार्थ-व्यवस्थापनस्य युक्ततया त्रिदण्डैकदण्डपक्षयोर्वैकल्पिकतायाः शङ्कि-तुमप्यशक्यत्वात् । तस्मादस्मदुक्तव्यवस्थैव साधीयसी ।

अथेदमप्यवधेयं त्रिकर्मणां भूमिहारद्विजानां क्षत्रियविशां चैकदण्ड एव मुख्यः क्षत्रियकुमारिकायाः सुलभायाः स्त्रियोऽपि यौ त्रिदण्डग्रहण–तत्परित्यागौ भारते आम्नातौ तौ तु युगान्तरे स्त्री-णामप्याश्रमान्तराधिकारितया तस्याश्च सर्वथा विशिष्टब्राह्मणतुल्य-तयेत्यनुदाहरणमेतत् । आमनन्ति च स्मृतिकारा युगान्तरे स्त्रीणां मौञ्जीबन्धनं स्वगृहे भिक्षां शाश्वतिकं ब्रह्मचर्यं चेति, न चैतत्कलौ।

न च कलिवर्ज्येषु संन्यासस्याप्याम्नाततया कथं तन्मीमांसनारम्भ इति वाच्यम्।

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।
अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे॥

इति विशिष्याग्निहोत्रसंन्यासयोर्विधानात्।

इदानीमपि तेषु तेषु पुण्यदेशेषु ब्राह्मणक्षत्रियवैश्यशूद्रादिविभागस्य कथंचिदपि स्वशाखामात्रस्य वा तदेकदेशस्य संहितादेर्वाऽध्ययनमपीति संन्यासः समुचित एव। केचित्तु कलौ संन्यासनिषेधशास्त्राणां विदण्डसंन्यासनिषेधपरत्वमेव कथयन्ति। युक्तं चैतत्तस्यैव मुख्यत्वेन निषेधशास्त्रतात्पर्यविषयताया युक्तत्वात्। परं तु मुख्यस्य विदण्डवतस्य यथा निषेधशास्त्रविषयता कैश्चिन्मुख्यत्वेन व्यवस्थापिता तथा तत एव हेतोः अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलाविति शास्त्रेण मुख्यस्य विधेयता ऽपि युक्तेति जन्मान्तरसहस्रसमनुष्ठितज्ञाताज्ञातशुभकर्मविपाकभाजां केषांचिदमीषां भगवति न्यस्तसमस्तभराणां बलवति कलावपि न्यासविधिर्युज्यत इति किं चित्रम्॥

किं च विविदिषासंन्यासस्य कलौ वर्जनसंभवेऽपि विद्वत्संन्यासो वैदुष्यनिमित्तक इति निमित्तसमवधाने स नैव निषेद्धुं शक्यते।

अत एव तु यदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुतिर्वैराग्ययोगे अहर्मात्रावकाशदानेऽपि न संचुकोच किं पुनर्युगकालावकाशप्रतीक्षा, स च श्रोतव्यः श्रुतिवाक्येभ्य इत्युक्तप्रकारेण श्रवणमनननिदिध्यासनानि सम्यगनुष्ठाय प्राप्तपरिहिना विदुषाऽनुष्ठितः संन्यासो विद्वत्संन्यासो यथा महर्षेर्याज्ञवल्क्यस्य, स हि मैत्रेयीमुपदिदिक्षुस्त्वर-

माणस्तां त्वरयितुं स्वकर्तव्यं संन्यासं प्रतिजज्ञे तदाया अथाह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा ऽऽहमस्मात् स्थानादस्मीति यथावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति अत इति होक्त्वा प्रवव्राजेत्युक्त्या अव्यवधानेन कथनप्रव्रजनयोः पौर्वापर्यम्नानान्मध्ये विदुषोऽनुष्ठेयान्तरं वारयतीति विविदिषासंन्यासे यथा श्राद्धाष्टकाद्यनुष्ठानं न तथा विद्वत्संन्यासे, ततश्च प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेदित्युक्तरीत्या तत्र प्रैषोच्चारणमात्रेण संन्याससिद्धिरित्यवगन्तव्यम् ।

अत एव ब्रह्मचारिगृहस्थादीनां प्रैषाभ्यासस्तथाऽऽवश्यको यथा सत्यां तात्कालिक्यां चौरव्याघ्राद्युत्थभीतौ तत्समुत्थायां संन्यसिषायामुपदेष्टन्तरनैरपेक्ष्येण स्वयमेव प्रैषमावर्त्य प्रव्रजितुं पर्याप्नुयात् । तथा हि महाभारतम् ।

उत्पन्ने सङ्कटे घोरे चौरव्याघ्रादिसङ्कटे ।
भयभीतस्य संन्यासमङ्गिरामुनिरब्रवीत् ॥
आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत् ॥

अत्र श्राद्धादिविधिमविधाय प्रैषोच्चारणमात्रस्य संन्यासपूरकत्वोक्त्या उपदेष्टृनैरपेक्ष्यं स्पष्टं सिध्यति, एवं च यदि गृहस्थादेः प्रैषमन्त्रोऽनोपस्थितिगोचरः स्यात्स्याच्चोपदेष्ट्राऽप्यपेक्षितः कथमचकल्पेत स्वयं संन्यासपूर्तिः । अङ्गिरा अप्याह—

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥
प्रव्रजेद् ब्रह्मचर्येण प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः ॥

इति, आतुरोऽतिसंनिहितमृत्युः, दुःखितः आगामिदुःखजन्यज्ञानवान्, भयभीतस्य संन्यासमङ्गिरामुनिरब्रवीदिति भारतोपबृंहणवाक्येन तादृशार्थस्योचितत्वादिति स्मृतितत्त्वविदः ॥

त्रिदण्डैकधारणपक्षयोर्मुख्यत्वामुख्यत्वविषये विप्रवदन्ते वादिनः प्रकारान्तरेणापि । निर्णयामः ।

तत्र दक्षः ।

वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव* च ।
यस्यैते नियता बुद्धौ त्रिदण्डीति स उच्यते ॥
वाग्दण्डो मौनमातिष्ठेत्कर्मदण्डस्त्वनीहता ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते ॥

इत्येवमान्तरमावश्यकं यतिधर्ममभिधाय, आश्रमचतुष्टयपरिचयार्थं बाह्यलिङ्गैस्तांल्लिलक्षयिषुः स एव ।

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यष्टिवेदाद्यैर्नखरोमैर्वनाश्रितः ॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक्पृथक् ।
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी ॥ इत्याह ।

ततश्च पूर्वोक्तबाह्याभ्यन्तरलक्षणशून्यानामनाश्रमित्वाभिधानेन यतीनामान्तरत्रिदण्डधारणपूर्वकं बाह्यत्रिदण्डधारणमावश्यकमितरथा तु पुनरनाश्रमित्वमिति युक्तमेव । अत्र ब्रह्मचारी गृहस्थो वनाश्रितो यतिरिति प्रत्येकमेकवचनोपादानेन शूद्रयादिकया प्रत्येकतत्तद्व्यक्तौ तत्तल्लक्षणवत्त्वमभिप्रेतमिति कुटीचकादिषु चतुर्ष्वपि बाह्याभ्यन्तरत्रिदण्डसत्त्वमुक्तं भवति । अत एव तु लक्षणानि

---

* कर्मदण्डश्च से चप इति पाठान्तरम् ।

त्रिदण्डस्य परित्याग एकदण्डस्य धारणम् ।
एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता ॥

इति वदन् त्रिदण्डधारणसमनियतधर्मानुष्ठानासमर्थस्याप्येकदण्डधारणमावश्यकमित्यावश्यकत्वलक्षणप्राधान्यमाचष्टे ।

अत एव महाभारते सुलभा–जनकसंवादादौ पुराणान्तरेषु चाभिधीयमानं वैणववैष्णवत्रिदण्डस्य तद्वतां च एकदण्डापेक्षया माहात्म्यमपि व्यासस्य सङ्गच्छते इति विवेचकाः ।

एवमेव तु त्रिदण्डस्याभ्यर्हितत्वेन चविषविशेषैर्वैष्णवलिङ्गधारणनिषेधादनुकल्पे एकदण्डेऽभ्यनुज्ञानं पुराणाचार्याणां श्रुतीनां च, एवमेव तु मन्वाना हारीत–दत्तात्रेय–पितामहाः कुटीचकादींश्चतुरोऽपि न्यासिन उपन्यस्य ।

वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः ।
लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम् ॥

इत्येकवाक्येन वैणववैष्णवत्रिदण्डस्य अविपर्ययम्भ परमहंसान्तानां चतुर्णामपि लक्षणत्वमाचक्षते । परमहंसस्यैकदण्डप्रतिपादनपरश्रुतीनां स्मृतीतिहासपुराणानां च ब्राह्मणे*तरपरत्वं पूर्वोपदर्शितार्थपरत्वमापत्परत्वं वेति तु भृशमभ्यधायीति नाम्रेडितुमवसरः । अत एव इन्द्रस्य वज्रोऽसीति त्रीन् वैणवान् दण्डान् दक्षिणे पाणौ धारयेदेकं वा यदोक्तं तदा सशिखं वपनं कृत्वा यज्ञोपवीतं त्यजेदिति मैत्रायणीयश्रुतिरपि परमहंसस्य त्रिदण्डं मुख्यमवबोध्य कर्मानुष्ठानासमर्थस्य तस्यैव शिखादेरनावश्यकतया तदंशेऽभ्यनुज्ञा-

* ब्राह्मणेतरस्य सलिङ्गसंन्यासासम्भवाभिधानं स्वपर्यालोचितशाखाणामेवेति सर्वमन्यत्र निरूपितमिति द्रष्टव्यम् ।

नतौ एकदण्डधारणं गौणतयाऽवबोधयति, अत एव त्वनुकल्पतासूचकं वा-पदम् ।

तस्मादिह महाप्रयाससाध्येतिकर्त्तव्यताकस्य त्रिदण्डधारणस्य अत्यल्पेतिकर्त्तव्यताकस्यैकदण्डधारणस्य च न समविकल्पो, नतरां कुटीचकादिविषयं त्रिदण्डधारणं परमहंसविषयं चैकदण्डधारणमित्यप्यवकल्पते कल्प, वेदप्रतारणभिया परतन्त्रप्रधानामुपबृंहणानुरोधेनैव श्रुत्यर्थस्यावधार्यतया यथाचारविषये स्मृतीनां स्वातन्त्र्येणापि प्रामाण्यं तत्र सन्दिग्धे श्रौतेऽर्थे शाखान्तरश्रुत्यनुमते चार्थनिर्णायकतायां विवेचकेनावश्यमङ्गीकरणीयतया अत्रि-दक्ष-हारीत-दत्तात्रेय-पितामहेश्वरैश्च स्मृतिकारैरेकस्वरेण पारमहंस्येऽपि त्रिदण्डानुस्मरणान्मेधातिथिप्रभृतौ स्पष्टं पारमहंस्ये त्रिदण्डधारणस्य चोद्यमानतया एकदण्डस्य चानुकल्परूपतया विधानात् । परमहंसस्य त्रिदण्डधारणविधिर्निरुक्तरीत्याऽप्यावश्यकत्वाच्च ।

ततश्चैकदण्डस्य मुख्याधिकारिकस्य त्रिदण्डस्य चाधमाधिकारिकत्वमिति सुकल्प त्रिदण्ड धारयत एकदण्डस्यावश्यमुपादानतया वह्वायाससाध्ये त्रिदण्डे कस्याप्यप्रवृत्त्या शास्त्रस्यानुष्ठापकत्वलक्षणप्रामाण्यापत्तेः । एकदण्डेनयमस्य परिग्रहमुखेन शिखायज्ञोपवीतत्रिदण्डशिक्यजलपात्रादित्यागेन मोक्षजननैकपथिकमदृष्टमुत्पद्यते इति तु स्वमतानभिज्ञानकृतमुच्छृङ्खलतामात्रम् । सत्यानृतधर्माधर्मादिसम्बन्धशून्यत्वेनाभिधीयमानस्याधिकारिणोऽदृष्टविशेषजिघिषया शिखायज्ञोपवीतादित्यागे वा एकदण्डादिपरिग्रहे वा प्रवृत्त्यनुपपत्त्या तथाऽभिधानस्य दुरभिनिवेशग्रस्तकल्पनेत्युपेक्ष्यत्वादिति इत्थं सनातन सनातनधर्म कल्पतरुमाश्रिता अमलमतय ।

कल्पतरुपरिमल वचनद्वयम् । कल्पित कल्पतरुमाश्रिता. परिमलमलयस्तु देहात्माभिमानेन तृणीकृतजगत्त्रया दम्भाहङ्कारमदमानादिवशीकृतसर्ववृत्तयो नैष्कर्म्यसिद्धिमुखेन शिखासूत्रदण्डत्याग पुरस्कृत्य नैष्कर्म्यसिद्धये यतमाना वयमिति शब्दमात्र प्रयुञ्जाना विपरीता. कर्मतो निरीक्ष्यन्ते । तथा हि कल्पतरौ ।

त्रिदण्ड कुण्डिका चैव सूत्र चाथ कपालिकाम् ।
जन्तूना वारण वस्त्र सर्वं भिक्षु परित्यजेत् ॥
कौपीनाच्छादनार्थन्तु वासोऽद्धंस्य परिग्रहम ।
कुर्यात्परमहसस्तु दण्डमेक तथैव च ॥ इति विष्णु ॥

कात्यायनाश्च ।

तत्र परमहसा नाम त्रिदण्डकमण्डलुशिक्यजलपात्रपवित्रपादुकासनशिखायज्ञोपवीतकपालाना त्यागिनो न तेषा धर्माधर्मौ न सत्य नापि चानृत सर्वसहा सर्वसमा. समलोष्टाश्मकाञ्चना यथोपपन्नभैक्षाहाराश्चातुर्वर्ण्ये भैक्षचर्य चरन्त आत्मान मोक्षयन्ते ।

इति स्मृतिद्वय पुरस्कृत्य अनयोश्च स्मृत्योर्दृढ प्रामाण्य समाधाय स्वप्रतिपिपादयिषितोऽर्थ. साधित· । तत्र समलोष्टाश्मकाञ्चनाना सर्वसहाना सर्वसमाना समीकृतसत्यानृतधर्माधर्माणा सर्वदा सर्वतो ज्ञातात्मतत्त्वाना कर्मण्यनधिकारात्सर्वत्यागिना सन्निहितत्रिदण्डकमण्डल्वादित्याग शरीरात्मत्वाननुसन्धानकृतोऽनूद्यत इति नेतरेषामनधिकारिणा रागद्वेषादिभाजा स धर्म्य इति सिध्यति अत एव तु कात्यायनवाक्ये त्यागिन इति त्यागशीलास्त्यागधर्मा-णस्त्यागसाधुकारिणो वा बोध्यन्ते आक्रोस्तच्छीलतद्धर्मतत्साधुकारिष्वित्यधिकारस्थेन सम्पृचानुरुधाङि‍ति पाणिनीयानुशासनेन घिनुणि

तादृशार्थस्य लाभात् । अथवा प्रथमार्थकतद्धितेनप्रत्ययान्तस्त्यागि शब्द उभयथाऽपि तु स्वभावसिद्धसर्वत्यागवता त्यागोऽनूद्यत एव युक्तं चैतत् ।

न हि त्रिदण्डैकदण्डधारणत्यागादिकं महाभागवता जडभरतादयोऽकार्षुरिति क्वचिच्छ्रूयते । न वा गङ्गागोदावर्यादिपुण्यतमनदीषु त्रिषवणं, कुरुक्षेत्रप्रभासद्वारकादिपुण्यपीठनिषेवणं वाऽनुतस्थुरिति क्वचिदुपलभ्यते । उपलभ्यमानं सदपि वा परस्योदाहरणीयतामाप्नोति । तेषामतिक्रान्तसर्वविधिनिषेधभूमिकत्वात्, तेषां हि सततात्मसमुपलीनवृत्तीनां यदृच्छासञ्जातत्याग—परिग्रहादिकं घिट पिनामृतेषु स्वभावसिद्धपक्षोद्गमनस्थितिनिपतनवदेव नेष्टद्विष्टसाधनताज्ञानकृतं किमपि पृथग्जनस्येव दोषदूषितचेतसः । अत एव व्यापकीभूतवासनाविरहादेव तेषां धर्माधर्मसम्बन्धविरहः काषया यने स्मर्यते ।

ततश्च यत्रै*काग्र्यन्यायेन यथासुखं ब्रह्मचिन्तनजुषां यथा न देशकालवयोजात्याभिजात्यासनादिनियमो न तथा त्रिदण्डैकदण्डशिखाशिक्ययज्ञोपवीतजलपात्रादिनियमोऽपीति किं नश्छिन्नम् ।

यच्च मन्त्रविशेषाम्नानमुखेन शिखायज्ञोपवीतादित्यागवचनजातं तन्तूपवीतद्वयवतामेकस्योपवीतस्य, अनेकशिखानां चैकशिखायास्त्यागबोधकमित्यादिकमिहैव ग्रन्थेऽन्यत्र निरूपितमिति तत्रैव द्रष्टव्यम् ।

एतेनेदमपि प्रतिक्षिप्तं वेदितव्यम् । मोक्षे श्रौतस्मार्ततत्तदाश्रमकर्मानुष्ठानजनितातिशयानामिव शिखाशिक्यत्रिदण्डयज्ञोपवी-

* यत्रैकाग्रता तत्राविशेषादिति ब्रह्मसूत्रोक्तन्यायेनार्थः ।

तत्यागजनितातिशयस्याप्यपेक्षणीयत्वेन शिखासूत्रादित्यागस्यावश्यकत्वमिति धर्माधर्मसंबन्धविरहिण एव सर्वथाऽऽत्मारामस्याभातसर्वार्थस्य त्यागाधिकारिताया: स्मृतिपूक्ततया शिखासूत्रादित्यागजन्यातिशयाधानार्थे त्यागप्रवृत्तेर्दुर्वचत्वात् । अत एव त्विहैव स्मृतौ न तेषां धर्माधर्माविति पठ्यते ।

तदेवं कायवायनस्मृत्यर्थनिह्नुपणनयेन विष्णुस्मृतिरपि व्याख्येया । विष्णुस्मृत्युक्त एकदण्डस्तु प्रकरणानुग्रहेण सर्वे त्यजतो ज्ञानरूपैकदण्डात्मेत्युचितमेवेति किं बहुना ऽभिहितेन वाग्विलापनस्वरूपेण । यदपि भगवतो व्यासस्य ।

यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धय: ।
उपकुर्वाणकात्पूर्वं यतो लोके न दृश्यते ॥
यावत्कर्माणि कुरुते तावदस्यैव धारणा ।
तस्मादस्य परित्याग: क्रियते कर्मभि: सह ॥
अग्निहोत्रविनाशे तु जुह्वादीनि यथा त्यजेत् ।
यथा च मेखलादीनि गृहस्थाश्रमवाञ्छया ॥
पत्नीयोक्तं यथेष्ट्यन्ते सोमान्ते च यथा ग्रहान् ।
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिन: ॥ इति,

स्मरणं न तदप्ययोगिनमधिकृत्य, स्पष्टमेव तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिन: इतीहैवाधिकार्युक्तेः, न हि शतं सहस्राणि वा वर्षाणि समाध्यारूढस्य कश्चिदपि स्नानसंध्याद्यननुष्ठानात्प्रायश्चित्तमातिष्ठते । स्मर्यते च पुराणेषु सुदीर्घे तपश्चरतां वल्मीकाद्युपच्छन्नदेहत्वमिति तादृशां स्वत एव कालपरिपाकमहिम्ना शिखासूत्रादिकं स्वकारणमपि*त्पृथिव्यादिभूतभावमाप्नोतीत्यत्र क-

* स्वकारणे लयमाप्नुवानम् ।

स्थाप्यस्य विवादसम्भवोऽपि, यत्त्वेतैरेव वचनैरयोगिनां देहात्ममानवतां शिखासूत्रादित्यागकथनं तदेव वैदिकमर्यादाविघट्टनं नो द्वेष्यम् । तदेव कल्पतरोः प्रतारणमात्रमयोगिनां निःसूत्रत्वादिव्यवस्थापनमिति ।

योऽपि महाभारतेऽपि ।

एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा ।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर ! ॥
तथा, जटाऽजिनधराश्चान्ये षड्विधा जितेन्द्रियाः ।
मुण्डानिस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ इति

समुद्योगोऽशिखत्वासूत्रत्वादिसमर्थनस्य सोऽपि न स्थाने अत्र ह्युत्तममध्यमाधमाधिकारिभेदेन आचारवत्तो दण्डिनोऽभिप्रेत्य भगवतः कृष्णस्य युधिष्ठिरं प्रति पूज्यत्वोपदेशः । तत्र त्रिदण्डिनः शिखिनो मुख्यत्वेन पूज्याः, भगवद्गीतासु ।

कर्मफलत्यागिनामेवोपक्रमोपसंहारादिना त्यागित्वस्याभिधानेन तादृशाचारस्य च परमभागवतेषु शिखिषु त्रिदण्डिष्वेव सम्भवात् ।

एकदण्डिनो मुण्डिनो मध्यमाः । तादृशाचारस्यानुकल्परूपत्वात् । त्रिदण्डालाभ एवैकदण्डविधेः कर्मानुष्ठानाशक्तावेव मोक्षारलम्बनाच्च ।

सर्वलक्षणशून्याः काषायमात्रग्राहिणस्त्रिदण्डैकदण्डरहिताः काषायमात्रसारास्तेऽधमास्तथाऽपि ते पूज्याश्चतुर्थाश्रमचिह्नत्वात्काषायधारणस्येति, अत एव त्विह काषायमात्रसारोऽपीत्यपि-कारस्वारस्यमपि नोपहन्यते इति भगवतो गीताशास्त्राचार्यस्य तात्पर्यम् ।

अत्र परिमलमतयः । शिखी त्रिदण्डीति बहूदकादिविषयं, मुण्डश्च एकदण्डीति परमहंसविषय, काषायमात्रधारिणः इति यो मुख्यपरमहंसो दण्डमप्यनिच्छन् पामरजनसङ्कोचपरिहाराय कौपीनाच्छादनमात्रं धारयति तद्विषयम् इति व्यवस्थापयामासुस्तदिदं मन्दमनीषित, न हि परमोत्तमाधिकारितात्पर्येण काषायमात्रसारत्वाभिधान समुन्मिषति तस्य बाह्याभ्यन्तरतः सारस्वरूपत्वेन काषायमात्रसारत्वाभिधानासङ्गतेः, न ह्येतादृशवि यत्राधिकारिणो चिह्नितत्वमपेक्ष्यते । यच्चोत्तमाधिकारिणः पामरजनसङ्कोचेन काषायधारणाभिधानं तदप्यनवधाननिबन्धनं श्रुतिपूत्तमाधिकारिण उद्दिश्य अनुन्मत्ता उन्मत्तवदाचरन्तः । इत्यभिहितत्वेन ये तृणीकृतजगत्त्रया महेन्द्रादिभ्योऽपि न सञ्चुकुचुर्ब्रह्मिष्ठास्तेषां पामरजनसङ्कोचस्य सर्वथाऽशङ्कनीयत्वात् । यत्तु,

जटाऽजिनधराश्चान्ये पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥

इति राजधर्मप्रश्नार्थे वचनं तदपि सन्यासिनो मौण्ड्यनि.—सूचनत्वाद्यवगमयदुत्तमाधिकारिणो निःशिखत्वासूत्रत्वादिसमर्थक तेषां महाभारते तादृग्भ्योऽभिधानादिति कल्पतरुभिधान तदपि कल्पनामात्रं प्रकरणतः श्लोकावर्यैश्च तादृशार्थस्यालाभात् । यथा हि महाभारतारम्भे क्लैब्यसमाविष्टचेतसा ममताऽऽकुलमानसेन स्वधर्मात्प्रच्योष्यमाणेन धनञ्जयेन कर्मानुष्ठानपराङ्मुखप्रवृत्तिता बहुधाऽऽवेदिता तावताऽपि भगवाल्लोकगुरुर्गीताद्युपदेशापदेशेन जगदुद्दिधीर्षुराश्रितवत्सलो भागवतप्रियः सखायमर्जुन याथातथ्येन* वेदा-

* अत एव, नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥

र्थमजिघृक्षत् अचूचुदच्च भागवतधर्मेषु,* तथैव युद्धान्ते कश्मलवृत्तितां गतो युधिष्ठिरः प्रजापालनलक्षणस्वधर्मात्प्रच्युतचेताः स्वयमच्युतेन भ्रातृभिर्द्रौपद्या परैश्च तत्त्वार्थवेदिभिः स्निग्धैरुपदिष्टश्चेतसः शान्तिं न लेभे न च प्रससाद राज्यमादातुं तदाऽवसाने भीष्मं स्वदर्शनेनानुजिघृक्षुर्भागवतधर्मान् भागवतादेव विश्रावयिषुर्युधिष्ठिरमादाय स्वयमाजगाम भीष्मसन्निधौ भगवान् कृष्णः, स च वरलब्धाव्याहतदृष्टिर्याथातथ्येन सर्वधर्मानुपदिदेश ततश्चैवं प्रवृत्तेऽस्मिन् श्लोके ।

जटाऽजिनधराश्चान्ये पङ्कदिग्धा जितेन्द्रियाः ।

इत्यादिमेनार्द्धभागेन सत्याश्रमिणां निर्देशः । अवशिष्टेन च कपटवेषाणां निर्देशो न त्वेकदण्डिनां शिष्टानाम्, अत एव न्विह वसन्त्यर्थार्थिनः पृथक् इति स्पष्टं तेषां मौण्ड्यं निःसूत्रतां चावलम्बमानानामपि अर्थार्थितया कपटमात्रमेतदिति तात्पर्यम् । अथ अन्ये पृथगिति पदद्वयस्वारस्यं गमकं, ततश्च सुकुमारस्य राज्ञो भवतो नाधिकारोऽत्याश्रमे तस्य दुष्करत्वात् ।

परस्य च कुहककारणकतया न ते न्यासे कथमपि प्रवृत्तिः श्रेयसे इति राजधर्मनिषेवणमेव न्याय्यमित्युपदिदिक्षितोऽर्थः ।

अत एव त्विह वसन्त्यर्थार्थिनः पृथगिति वदन् कपटकाषायाणां निर्जनवासोऽप्यर्थार्थिताप्रयुक्त इति व्यञ्जयन्च तेषामनुकरणं विरक्तस्य ते युक्तमिति बोध्यते । तस्मादिह त्वन्मिषाधर्षितार्थस्य न लवेनाप्यनुप्रवेशसम्भावनेति न स्थाने विजयसंनाहः ।

यदपि लिङ्गेऽपि पुराणे ।

निकृत्य सशिखान् केशानुपवीतं विसृज्य च ।
पञ्चभिर्जुहुयादप्सु भूःस्वाहेति च वा क्रमात् ॥

* इत्यधिकमवगन्तव्य पञ्चमे कर्मणि ।

इति दिग्वाससां स्वर्गाग्रीष्वेव प्रसह्य लिङ्गप्रदर्शनं तदपि तेषामेव लज्जावहम् । नानोपवीतानां नानाशिखानाञ्च पुंसामेकैकशिखायज्ञोपवीतत्यागपराणामेषां वचसां परेषां विषयविविक्तेऽर्थे प्रामाण्यविरहात् ।

यदपि पद्मपुराणेऽपि ।

ततो व्रतानां परमहंसव्रतमनुत्तमम् ।
तेभ्यो ददौ दिवौकोभ्य' सतामप्यविरोधि यत् ॥
पठ्यते यज्ञशाखायां महत्येतामह व्रतम् ।
पर ब्रह्मोदितं तद्वदागमाचारचेष्टितम् ॥
ब्रह्माराधनमुख्यानां व्रतिनां तीव्रतेजसाम् ।
भृगुरध्यापयामास वेदोक्तं परमं हि तत् ॥
एव व्रतधराः सर्वे वसन्ति स्मांऽमरेश्वराः ।
हंसव्रतधरा भूत्वा ध्यायमानाः परं पदम् ॥
हित्वा शिखां सोपवीतां विधिना परमेण ते ।
कालेन महता ध्यानादेव ज्ञानात्मतां गताः ॥
हंसव्रतिनो ये चात्र नियताः संयतेन्द्रियाः ।
एव भिक्षां तु भुञ्जाना ध्यायमाना परं पदम् ॥
दण्डहस्तास्तु सञ्जाता भिक्षाव्रतसमन्विताः ।
त्यक्त्वा शिखां सोपवीतां दण्ड एक' करे धृतः ॥
हंसव्रतं पर प्रोक्तं पुरा चीर्णं मया चिरम् ।
व्रतानां परमं गुह्यं पवित्रं पापनाशनम् ॥
हंसव्रतं द्विषन्मोहात्पापेनाच्छादितो नरः ।
न स मुच्येत पापेन कल्पकोटिशतैरपि ॥

तस्माद्धंसव्रतानां तु न हन्यान्न च दूषयेत् ।
भिक्षां परमहंसानां यतीनां यः प्रयच्छति ॥
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ।
शिखां यज्ञोपवीतं च त्यक्त्वा चरति यो व्रतम् ॥
हंसव्रती स विज्ञेयो मोक्षगामी भवेत्तु सः ।
शिखायज्ञोपवीतेन त्यक्तेनासौ कथं द्विजः ॥
निन्द्यते देवलोकेषु पूजितो देवदानवैः ।
दुष्टं विशिष्टमथवा हंसव्रतधरं नरम् ॥
न स्पृशेदङ्गमङ्गेन देवरूपः स वै द्विजः ।

इति कल्पतरुः, तदिदमपि न तस्यार्थसाधकं प्रत्युत सिद्धान्तिनोऽनुकूलं 'देवेषु ब्रह्मा बृहस्पतिः क्षत्र इन्द्रो विशो मरुतः' इत्यादिना ब्राह्मणेन ब्रह्म-क्षत्रिय-वैश्य-विभागसद्भावव्यवस्थापनेन तत्र क्षत्रियवैश्ययोः शिखासूत्रत्यागपुरस्सरमेकदण्डाधिकारस्य स्थापितत्वेन क्षत्रविड्जातीयदेवानामन्येषां चैकदण्डाधिकारित्वाद् दृशां निर्जराणां पाद्मोक्तैकदण्डशिखासूत्रादित्यागलक्षणसन्न्यासस्य समुचितत्वात्, प्रायो हि देवानां भोगभूमिगोपकरणदृढतरकलेवरपटुतमेन्द्रियनिर्जरत्वेऽप्सरःसौलभ्यादिना नानुकूल्यं परमपुरुषार्थसाधनसामग्रीष्विति निष्कामकर्मानुष्ठानपराङ्मुखवृत्तीनां तेषां त्रिदण्डधारणानधिकारितया अरुन्धतीतारकानुप्रदर्शनन्यायेन मुख्यमार्गे प्रवृत्तिमासादयितुमेकदण्डग्रहणमनुमन्यते । एवमेव तु भगवतो व्यासस्य । तदुपर्यपि बादरायणः सम्भवादिति सूत्रेण साम्भविकस्याभिधानसूचितं देवानामनिर्विण्णानां दुःखबहुलमानुषापेक्षया मोक्षेऽधमाधिकारित्वाभिधानम् । एवमेव त्विह हंसव्रतं परं प्रोक्तं पुरा चीर्णं मया चिरमिति

जन्मान्तरानुष्ठितैकदण्डग्रहणेन चिरं चीर्णेनापि मोक्षो नाभूत् किन्तु पापनाशनमात्रमेव अत एवाग्रे पवित्रं पापनाशनमित्युच्यते, ततश्च त्रिदण्डस्यैव नैकदण्डस्य अन्तरङ्गोपायतेति प्रघट्टकार्थ इति न तिरोहितं तीक्ष्णधियाम् । अत एव त्विह पुराणाचार्यैः सतामप्यविरोधि यदित्यूचे । अयमर्थः ब्राह्मणानां हि वेदवैष्णवत्रिदण्डधारणं मुख्यं यत्क्षत्रियवैश्ययोर्निषिद्धं परं त्वापत्काले सतां सत्त्वप्रधानानां ब्राह्मणानामपि यन्न विरुध्यते । अवस्थाविशेषे ब्राह्मणानामपि तथाभावस्यानुज्ञातत्वात् वलीपलितसमाक्रान्तास्त्रिदण्डसमनियताचाराशक्ता जरसाऽभिभूतवर्ष्माणो ब्राह्मणा अपि मौण्ड्यैकदण्डधारणाधिकारिण इत्यवमहि ।

अत एव महाभारते ।

जरया च परिद्यूनो व्याधिना च प्रपीडितः ।
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ॥

इत्यारभ्य ।

केशलोमनखान् वाप्य वानप्रस्थो मुनिस्ततः ।
आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः ॥

इत्यादिना जराऽभिभूतदेहस्य चतुर्थाधिकारिताऽभिहिता । यत्तु सतामप्यविरोधि यदित्यस्य सन्तो ब्रह्मसाक्षात्कारवन्तः । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति श्रुतेस्तेषामद्वितीयब्रह्मसाक्षात्कारनिरस्तसमस्तकर्तृकर्मक्रियादिभेदप्रपञ्चानामप्यविरोधि नैष्कर्म्यादित्यर्थोपवर्णनं तत् वचनस्वारस्याज्ञानकृतं तथा सति सतां परमनुकूलमेकदण्डधारणमभिप्रेत्य अविरोधित्वाख्यानस्यासङ्गत्यापत्तेः । न हि सचेतसामनुकूले सुखे अविरोधित्वाख्यानं किन्तूदासीने उपे-

चार्हे तृणादावित्यकिंचिदिदम् । अथासन्त इत्यादिकमपपाठमुपकल्प्य तदर्थान्वाख्यानं तु प्रायोऽशुद्धमभिधाय कुचोद्यतुल्यमित्युपेक्ष्यते ।

केचित्तु केशनखलोमवापनपदेन पुराणशिखादित्यागेन नूतनशिखादिस्थापनमभिप्रयन्ति उदाहरन्ति च स्मृतिवचनानि । नखानि निकृत्य पुराणं वस्त्रं यज्ञोपवीतं कमण्डलुं त्यक्त्वा नवानि गृहीत्वा ग्रामं प्रविशेदित्यादीनि । प्रदर्शयन्तु नाम ते तावताऽपि अधिकारिविशेषे व्यवस्थितं स्पष्टमभिहितं मौण्ड्यैकदण्डधारणं न नो द्वेषविषयो यथाऽधिकारं सर्वस्यापि व्यवस्थापनीयत्वात् । तस्माद्वैष्णवत्रिदण्डममुख्यमामनतां केषाञ्चिदमीषां जन्मान्तरोपचितदुरभिनिवेशादृते न किंचित्प्रमाणमिति प्रमाणपरायणाः ।

यदपि केचन वैष्णववेषत्रिदण्डं द्विषन्तः युधिष्ठिरधनञ्जययोस्त्रिदण्डपरिव्राजकवेषग्रहणे यज्ञोपवीतादिसद्भावो राजगृहेषु चिरनिवासार्थितया कुटीचकाद्यनुकरणाद् यज्ञोपवीताद्यत्यागेन कुटीचकाद्यनुकरणे सम्भवति स्वाश्रमविरुद्धेन तत्त्यागेन परमहंसानुकरणानौचित्यात् । एवं दशाननस्यापि कुटीचकाद्यनुकरणादेव यज्ञोपवीतादिसद्भाव ।

इत्याहुः परिमलमनयन्तादिदमप्यमलमतीनां हासास्पदम् । लोको हि स्वार्थसाधनतत्परः सर्वथा तं वेषमनुकरोति येन स्वात्मगोपनपुरस्सरमवश्यमर्थसिद्धिनिश्चयस्ततश्च दशाननस्य रक्षोजातीयस्य कामक्रोधोभयाकुलचेतसः शिखासूत्रादेरनावश्यकतया मौण्ड्यैकदण्डधारण एव प्रवृत्तिरुचिता स्याद्यदि चेतायां पारमहंस्यं मौण्ड्यैकधारणेनैव व्यक्तीकृतं स्यात् उत्तमाश्रमानुकरणेन कार्यसिद्धेरवश्यं सम्भाव्यमानत्वात् । न हि रक्षसां रूपवेषादिनियमः शिखासूत्रा-

दिनियमो वा, नियमे वा कामरूपाणामिच्छानुरूपसर्वकार्योणां तेषां शिखासूत्रादित्यागतद्ग्रहणयोर्न कश्चिदायासः प्रत्यवायो वा । अत एव दशाननभगिन्या शूर्पणखया दिव्यं विग्रहमास्थाय श्रीरामो लक्ष्मणश्च यथानुक्रमं पतिभावेनाभ्यर्थितः, एवं च सति दशाननस्य तदधिकसामर्थ्यस्य मौण्ड्यैकदण्डधारणादिकमपि सुकरमवश्यमनुष्ठेयमेवाभविष्यद्यदि त्रेतायां त्रिदण्डापेक्षया तत्र बहुमानास्पदता समभावयिष्यत् । न च त्रेतायुगसम्भवाः स्वाभाविकसत्वोत्कर्षशालिनः पुरुषा मौण्ड्यैकदण्डधारणशिखासूत्रादित्यागे बहुमानभाजोऽभूवन्निति दशाननस्य न तथाऽनुकरणम् । अत एव महाभारते समरानन्तरमनुष्ठितौर्द्ध्वदैहिके शोकाकुलमानसे राज्यपराङ्मुखचेतसि युधिष्ठिरे तं कृच्छ्रलब्धाद्राज्यसुखाद् भ्रंशयितुं क्षत्रियस्य स्वधर्मभूतेऽपि रणेऽश्रद्धामभिव्यङ्क्तुं च समागतेन चार्वाकेण शिखासूत्रादिषु अलौकिकसाधनेषु सर्वथा विश्वासविरहिणाऽपि त्रिदण्डसन्यास एवान्वकारि न त्वेकदण्डसन्यासस्तत्र तदानीन्तनानां बहुमानविरहात् । प्रत्युत कर्मवैमुख्येन मौण्ड्यस्य सतां विद्वेष्यत्वाच्च, तथा हि ।

महाभारते शान्तिपर्वणि राजधर्मानुशासने ।

> राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ।
> तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः ॥
> साक्षः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः ।
> वृतः सर्वैस्तथा विप्रैराशीर्वाद विवक्षुभिः ॥ इति,

स्पष्टमिदमेतेन यतत्तत्सर्वाखिलत्वत्रिदण्डित्वाद्यनुकरणं तेषांतेषां स्वात्मगूहनाय बहुमानलाभाय च, ब्राह्मणानां त्रिदण्डसंन्यासस्यैव युगान्तरे शिष्टैः पुरस्कृतत्वान्मोक्षमुख्योपायभावेनाभ्यर्हितत्वेन तादृश्यस्यैवानुकरणीयत्वाच्च, युधिष्ठिरधनञ्जययोस्तु क्षत्रिययोः सर्वथा

स्वजात्याभिजात्यादिकं निजुह्नूषमाणयोः क्षत्रिययोः ब्राह्मणेनैव धार्यस्य त्रिदण्डसन्यासस्य ग्रहणं परमसमञ्जसमितरथा क्षत्रियत्वादिपरिचयक्रमेण कदाचित्पाण्डवत्वतत्तच्छक्तित्वादिप्रकारकज्ञानस्यापि सम्भवत्सामर्थ्यीकत्वेन कार्यविपत्तिरेवापद्येत । भगवतः श्रीकृष्णस्य लीलामानुषस्य ज्येष्ठत्वाऽऽदेवकीयेन श्रीबलरामेण स्वस्वसुः सुभद्राया सुयोधनाय दातुमभिप्रेततया सन्यासस्य कथमप्येवमपर्यवसाने कार्यविपत्तेः स्वयधृतत्वात् । एकदण्डधारणादिलक्षणसन्यासस्य च क्षत्रियेषु सम्भावितत्वाद् बहुमानानास्पदत्वाच्च ।

एकं दण्डं समाश्रित्य जीवन्ति बहवो नराः ।
नरके रौरवे घोरे कर्मत्यागात्पतन्ति ते ॥

इति स्मार्तप्रसिद्धैकदण्डसमाश्रयणे चिर क्षत्रियोचितकर्मणा त्यागस्य चास्तवसर्वाश्रमविरुद्धस्य निरन्तरनिरयनिदानस्यापतिप्रसङ्गाच्चानुष्ठानं धनञ्जयादेः । किञ्च मौण्ड्यैकदण्डलक्षणसन्यासस्य क्षत्रियेषु सम्भवान्नैकदण्डधारणं तथा गुप्तयेऽर्जुनस्य यथा त्रिदण्डसन्यासस्तस्य परमोत्तमाधिकारिकत्वेन स्वप्रकृतिकक्षत्रियादेरनधिकारादित्यसकृदवोचाम । किञ्च विधिविहितानां कर्मणां त्यागो न कदाचिदपि कस्यापि भुञ्जानस्य शयानस्योत्तिष्ठतः साधनतादानवत् ईषदपि शरीरप्रत्ययवतो विहित इति तस्यान्ध*बधिरातुराचिकित्स्यरोगार्तेष्वेव न्याय्यत्वेन देवकन्याकमनीयातिकान्तकायस्य महाबाहोर्भ्रान्तविश्रान्तविशालारविन्दनेत्रस्य वज्रसंहननदेहस्य राजकुमारस्य स्वात्मानं सर्वथा अपजुह्नूषमाणस्यापि धनञ्जयस्यातिकान्त

* यथोक्तं महाभारते ।

उत्पन्ने सङ्कटे घोरे चोरव्याघ्रादिसङ्कटे ।
भयभीतस्य संन्यासमङ्गिरा मुनिरब्रवीत् ॥ इति,

वपुर्न निह्नोतुं शक्यमिति तेनानधिकारिणैकदण्डलक्षणसन्यासोऽवल म्बितो दुष्प्रत्ययायैवोपकल्पित स्याद् धर्ममर्माभिज्ञस्य द्वारकाज निस्य, न हि तदानीन्तना द्वारकावासिन इदानीन्तनपृथग्जना इव उचिताचारानभिज्ञा सुरज्ञना । इदानीन्तना द्वारकावासिन कदा-चत्कस्मिंश्चिद् धूर्तेऽपि शास्त्रविधुराचारेऽतिकपटकौशलक्रीडिकया सुप्रत्ययमादध्युरनध्ययनाच्छास्त्राणामसंसर्गाच्च धीमतामिति सम्भा-व्येतापि, न त्वेवमीपदपि तदानीन्तनेष्विति धनञ्जयस्य त्रिदण्ड धारणलक्षणाचारस्तदानीन्तनचर्याविद्यावृद्धाना परमहंसमहात्मना भागवताना सर्वथा सर्वस्य द्वारकावासिनो जनजातस्य विश्वासभा जनत्वेन तेषामनुचिकीर्षयैव न तु गृहस्थे स्वनुकरणस्य कुटीचका-चारस्यानुचिकीर्षया, न हि कुटीचकादेराचारो गृहस्थसविधवृत्तिर्य-ज्ञोपवीतादिलक्षण इति पार्थस्य त्रिदण्डग्रहणं, कुटीचकस्यैकयज्ञोप-वीतत्वेन गृहस्थस्य यज्ञोपवीतद्वयवत्त्वेन एकोपवीतत्यागमात्रेण पा-र्थस्य प्रत्यवायसंस्पर्शात् । न ह्येको द्वौ द्वौ वा एक इत्यणुरपि वि शेषोऽव्यवसायकर इति न्यायानुकूल्यसम्भावनाऽपि परपक्षे, तस्माद् वृथैव धनञ्जयादेस्त्रिदण्डलक्षणसन्यासस्य स्वपक्षे मिथ्या षण्ढ*क-न्यायेन आनुकूल्य मिधानम् । एव च त्रिदण्डिचक्रवाकन्यायनैवं जनाना सार्वजनीनबहुमानभाजनत्वपरमविश्वासभूमित्वात्मसमुखीनवृत्तिम-त्त्वादिलक्षणत्रिदण्डसहचरितताद्रूप्यानुचिकीर्षयैव धनञ्जय–दशान नादेस्त्रिदण्डधारणानुकार इति परीक्षन्ता विचक्षणा परिमलोत्कीर्मा-लिन्यनिबन्धना परिविहस्येति किमत्राल्पे विषये बहुनेति विरमाम ॥

---

* परस्पर भगिन्यौ सत्यावोढारौ भवत पुरुषौ परस्पर षण्ढकौ *ततश्चैकेना तिदरिद्रेण कश्चन धनिकस्त्वदगृह पूर्णीकरणसाधनचक्रिका यत्पथतप्रापणनिर्मिता मदगृहे यदिच्छसि तत्पर्वतासत्यामसम्भवत्यावां षण्ढकाविति विरचय्य चातुरीं मिथ्या सम्बन्धयाजनप्रयोग्यान कृत केनचित्तत्तुल्यमित्यर्थः ।

परिमलमतोन्मूलनम्

यदपि पुनः परिमलमतयोऽप्यपदर्शिताः । ननु जाबालोपनिषदि परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरत—दत्तात्रेयरैवतकप्रभृतयः । इति दुर्वाससः परमहंसेषु परिगणनं कृतं तस्य च हंसडिम्भकोपाख्याने ताभ्यां छिन्नाः शिक्यादयो वर्णिताः । अतः शिक्यतत्सहचरितत्रिदण्डपवित्रादिकं परमहंसस्याप्यस्तीत्यवसीयते इत्याशङ्क्याह । पराक्रान्तं चेति । इत्यवतार्य, अयमाशयः तस्मिन्नुपाख्याने हंसाः परमहंसाश्चेति दुर्वाससमनुवर्तमाना हंसादयोऽपि यतयो वर्णितास्तदीयशिक्यादिविषयं भविष्यति शिक्यच्छेदादिवचनम् । किं च श्वेतकेतुप्रभृतयोऽपि जाबालोपनिषदि परमहंसेषु परिगणिताः, न च तेषामाश्रमेण पारमहंस्यमस्ति ब्रह्मचर्यादिश्रवणात् । अतस्तत्त्वसाक्षात्कारवत्त्वेन वृत्त्या पारमहंस्यमुपपादनीयम्, एवमेव दुर्वाससोऽपि भविष्यति । अत एव तस्य तत्र तत्र राजगृहादिषु चिरनिवासोऽपि पुराणेषु प्रतिपाद्यते इत्यादिपरिहार उक्तः । इति कपोलकल्पनया कल्पतरुं परिररक्षुः । तदेतदहमहमिकानिबन्धनं निर्विषस्यापि सर्पस्य फटाटोपो भयङ्कर इति न्यायेन भट्टपादशिष्येणारभटीप्रदर्शनमन्यथा वस्तुतत्त्वमदोषदूषिकायुक्तं हंसडिम्भकोपाख्यानग्रन्थस्याक्षरतोऽर्थतश्चाज्ञानकृतं च तद्यथा महाभारते खिलेषु हरिवंशे सप्ताधिकशततमाध्याये जनार्दनो विप्रकुमारको हंसडिम्भको च भ्रातरौ क्षत्रियकुमारौ एते त्रयोऽपि परस्परं स्नेहपाशतामुपयाता आसन्न भिन्नशरीराः सहचराः कदाचित्तु ते त्रयोऽपि प्रयोजनवशेन पुष्करस्योत्तरतीरस्थितं परमहंसं महामुनिं दुर्वाससमुपसेदिवांसः स च महामुनिरासीच्छिष्यैः परिवृतः । यथोक्तम् ।

तर्कैर्निश्चिततत्त्वार्था ज्ञाननिर्मलचेतसः ।
हंसाः परमहंसाश्च शिष्या दुर्वाससः प्रभो ॥

गत्वा तत्र महात्मानौ तौ दृष्ट्वा तूर्ध्वरेतसम् ।
दुर्वाससं महाबुद्धिं विचिन्त्यानं परं पदम् ॥
क्रुद्धो यदि स दुर्वासा दग्धुं लोकानिमान् क्षमः ।
देवा अपि च यं द्रष्टुं क्रुद्धं वै न क्षमाः सदा ॥
रोषमूर्तिः सदा यस्तु रुद्रात्मा विश्वरूपधृक् ।
रक्तकौपीनवसनो हंसः परम एव च ॥ इति,

अथ शिष्याणां हंसपरमहंसत्वाख्यानात्स्पष्टं दुर्वाससः परमहंसत्वं, न हि ब्रह्मचारिगृहस्थादेः परमहंसाः शिष्या इति शास्त्रतो लोकतो वा युज्यते । अत एव त्विह रक्तकौपीनधारित्वेन आश्रमत. पारमहंस्यमाविष्कर्तुं रक्तकौपीनवसनो हंसः परम एव चेति स्पष्टम गौणमर्थेत आश्रमिकं पारमहंस्यं दुर्वाससः उच्यते, तदनन्तर बलदृप्तयोर्हंसडिम्भकयोः परमहंसे दुर्वाससि चक्षुःपथमुपयाते तादृशी दुर्मतिः समुत्पन्ना यतो चतुर्थमाश्रममेव समूलमुन्मूलयितुकामौ आश्रममेव भृशं निनिन्दतुः । उपसेदिवांसौ च तौ दुरात्मानौ ऊचतुः ।

ध्यानलेशाद् विहीनात्मन्! किं ते व्यवसितं द्विज!
कश्चायमाश्रमो विप्र! भवता यः समाश्रितः ॥
गृहमेधं परित्यज्य किं त्वया साधितं पदम् ।
दम्भ एव भवान् व्यक्तं शङ्के नान्यच्च कारणम् ॥
लोकांश्चेमान् सदा मूढ! नाशयिष्यसि निर्वृतः ।
एतान् सर्वान् विनेतासि नरके पातयिष्यसि ॥

इत्याद्याकुलदुरुक्तिसंमिश्रं बाधमानार्थंवाक्यकलापं, ततश्च तयोर्नैसर्गिकशुभाकाङ्क्षी जनार्दनो हंसडिम्भकौ मा मैवं ब्रुवाथामित्याह ।

उवाच च यतिं दृष्ट्वा प्रणम्यासौ विनीतवत् ।
मा ब्रूतामीदृशं वाक्यं राजानौ मन्दतेजसौ ॥ इति,

अत्रापि च यतिमित्युक्त्या स्पष्टं चतुर्थाश्रमित्वं दुर्वाससः । पुनरपि च जनार्दनः ।

एते हि यतयः शुद्धा ज्ञानदीपितचेतसः ।
ज्ञानाग्निदग्धकर्माणः प्राणान् प्राणेषु जुह्वति ॥

इति स्पष्टं यतित्वमाचष्टे ।

तेषामप्यश्चतुर्थोऽयमाश्रमो भिक्षुकः स्मृतः ।
आस्ते तस्मिन् महाबुद्धिः स हि पुण्यतरः स्मृतः ॥

इति च भगवन्तं दुर्वाससमेवोद्दिश्य, ततश्च जनार्दनेनोपशमितोऽपि रुद्रांशसम्भवो दुर्वासाश्चुक्रोध ताभ्यामुवाच च ।

इतो गच्छत राजानौ किं विलम्बत मा चिरम् ।
न वा वचनसम्भूतं रोषं धारयितुं क्षमे ॥ इति,

हंसडिम्भकौ तु कुपिताद्दुर्वाससो न बिभ्यतुर्नापि निर्जग्मतुः स्थानात्तदा कोपाकुलमानसो मुनिरेवोत्थातुमुपचक्रमे तदपि च तौ न विषेहाते किन्तूदयुञ्जाते सन्यासचिह्नादाहत्यैव प्रव्राजयितुं भगवन्तं दुर्वाससम् । यथाऽऽह ।

तत उत्थाय धर्मात्मा गन्तुमैच्छद्*यतीश्वरः ।
ततो निषेद्धुं हंसस्तु यतते स्म यतीश्वरम् ॥
तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम! ॥

अत्रापि यतीश्वर इति, यतीश्वरमिति च स्पष्टयति पारमहंस्यम् । ततश्च परमहंसगुरोर्दुर्वाससः सविग्रहस्तेन ता तादृशीं

* कौपीनकर्त्तनेन संन्यासधर्मादपाकर्तुमिति भारतभावदीपिका ।

दुर्गतिमवेत्य हंसानां परमहंसानां च सा सर्वोऽपि संहतिर्दिशो विदिशश्च पलायाञ्चक्रे । अन्यथा गुरोरिव सर्वस्यापि संन्यासिनः परमहंसादेर्हस्ते धृत्वा कौपीनशिक्यपूजापात्रत्रिदण्डादेश्छेदे संन्यासस्य दुर्गतिरेवापद्येत । उपोषवासमुन्यन्नाशनभूमिशयनविषयत्यागनिषेवणादिना तनूकृतदेहाः सत्त्वप्रकृतयो भिक्षुका हि धनुष्कूर्माद्यामिषाशनपरिपुष्टदेहान् मृगयाव्यसनलघूकृतसर्वाङ्गान् सततशरासनव्यसनविहितकरकौशलान् राजकुमारकान् राजसप्रकृतीन् कथमतीत्य वर्तेरन्निति युक्तमेवापदि पलायनम् । तदेतदुक्तम् ।

*यतयोऽन्ये पलायन्ति दिशो दश विचेतसः ।* इति,

दुर्वासास्तु शापेन सर्वानमूँल्लोकान् दग्धुं क्षमोऽपि तस्मिन्नवसरे न शशाप यतस्तौ परेण हन्तव्यौ अत एवेहोक्तम् ।

दुर्वासाः सत्यधर्मस्तु हन्तुमीशोऽपि तौ ततः ।
मन्दमन्दमुवाचेदं हंसं डिम्भकमेव च ॥
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ ।
तथाऽपि न करोम्यन्तं यतयो ह्यच ते* वयम् ॥
यो हि देवो जगन्नाथः केशवो यादवेश्वरः ।
शङ्खचक्रगदापाणिर्गर्वं वां व्यपनेष्यति ॥ इति,

एतेन स्पष्टमिदं सिध्यति यद् दुर्वाससि हंसेन बाहौ बलाद् गृहीते डिम्भकोऽपि नान्यान् यतीनन्वधावत् किन्तु हंससाहाय्यमेवाकरोत् । अत एव स्पष्टमिहोच्यते हंसं डिम्भकं च मन्दमन्दमुवाचेति । मन्दोक्त्या हंसडिम्भकयोः सांनिध्यं सिध्यति । तेन वक्ष्यमाणशिक्यहरणादिकमन्योन्यं हंसकुटीचकादीनामभिप्रेयते न तु दुर्वाससः

* ते इति सर्वथा दूरे पलायितानां मुनीनां निर्देशः ।



इत्युत्प्रेक्षमाणाः सर्वथा प्रतारकाः शास्त्रमर्मानभिज्ञा इत्यवधेयं, यतो दुर्वाससि यष्टौ गृहीते सर्वान्ये यतयो दिशो विदिशश्चान्वधावन् डिम्भकोऽपि चानन्यव्यापारो हंसस्यैव साहाय्यमनुतस्थौ, दुर्वासाश्च तयोरनन्यसंमुखीनतामवलोक्य समुत्पन्नात्याश्चर्यो मन्दं-मन्दमुवाचेति कालविलम्बे जाते न तावन्येषु यतिषु हंसेषु परमहंसेषु वा भयाद् द्रवमाणेषु किमपि विप्रकृतमाचेरतुरित्यपमरोऽपि वक्तुं पार्यते। किंच दुर्वाससो हंसडिम्भकमिषेण ब्राह्मणकुमारकेणापि संवादो जातः, जातश्च जनार्दनस्यापि ताभ्यां सह संवादः।

एवं च महति कालविलम्बे धर्मलोपभयाद् भीता यतयो मृगवेगमनुकुर्वाणा नैव ताभ्यां प्राप्ताः, येन तौ तदीयशिक्यादिकमच्छैत्तामिति कल्पयितुं शक्येत, एवं च सति।

ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ।
शिक्यं कमण्डलुं चैव द्विदलं दारुमेव च॥
दण्डान् पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्वशः।
तस्मिन् देशे महाराज! व्याधैर्मांसान्यदीदहन्॥

इति दशा परमहंसस्य हंसपरमहंसगुरोश्च दुर्वाससः एवाभूदिति विदुषां सुनिश्चितम्। शिक्यं कमण्डलुः इत्येते प्रसिद्धे, द्विदलदारुपदेन गोकर्णाकारं भोजनपात्रमुच्यते, दारुमिति पुंस्त्वमार्षम्। पात्रविशेषपदेन पूजापात्रादि, भारतभावदीपिकायामप्ययमेवार्थोऽभिहितः, तेषामर्घ्याचमनीयादिभेदेन बहुत्वाद्बहुवचनम्। दण्डानिति तु बहुवचनं वैणवविदण्डाभिप्रायम्। अत एव द्वारकामध्यास्य भगवतः श्रीकृष्णस्य निकटे हंसडिम्भकापराधनिदर्शनावसरे शिक्यं च दारवं पात्रं द्विदलान् वेणुकान् बहूनिति स्वयमावेदयामास

वेणुबहुत्वं दुर्वासाः, वेणुकानित्यत्र क-प्रत्ययो ह्रस्वार्थः। ततश्च त्रिदण्डस्य छेदनेन एकैकस्य दण्डस्यानेकभावे जातेऽपि तेऽभूवन् प्रकृत्या चव इत्यावेदयितुं वेणुकान् बहूनित्युक्तमन्यथा वेणुकानित्युक्त्यैव बहुत्वे लब्धे बहूनिति वृथैव स्यात्। ततश्चैव महामुनिर्दुर्वासाः स्वस्य त्रिदण्डधारित्वेन मुख्यं यतित्वमबूबुधदिति हंसडिम्भकापराधगौरवमपि भवति भगवते निवेदितम्। इदं च त्रिदण्डशिक्यद्विदलकर्पटपूजापात्रकमण्डल्वादिविषये दुर्वाससः एव विवक्षितं नान्येषां तदनुयायिनामपि।

छिन्नं ताभ्यां समादाय शिक्यं दारुमयं तथा।
द्विदलं कर्पटं चैव कौपीनमथ वल्कलम्॥
कमण्डलुं तथा राजन्नर्द्धप्रोतकपालकम्।
एतानन्यान् समादाय द्रष्टुं केशवमाययुः॥

इत्यस्मिन्नेव प्रकरणे दशाधिकशततमाध्यायेऽभिधाय एकादशाधिकशततमाध्याये।

वृष्णिषु पुण्डरीकाक्षः सात्यकिर्बलभद्रकः।
वसुदेवस्तथाऽक्रूर उग्रसेनस्तथा नृप॥
अन्ये च यादवाः सर्वे सम्भ्रमं प्रतिपेदिरे।
इदं किमिदमित्येवं व्याकुलमनसो ऽभवन्॥
पृष्ठतोऽप्यनुगच्छन्ति दिधक्षन्तो जगत्त्रयम्।
अर्द्धकौपीनवसनं स्मरन्तं कमपि द्विजम्॥
अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिम्।
अनार्य्यैर्ननतरोपेतं हुताशादितकल्मषम्॥
नैवोन्यितामहार्याहू प्रवर्त्तं यादवेश्वरम्।
दुर्वाससं ते ददृशुर्भीता यादवसत्तमाः॥

इत्यभिधानमेव प्रमाणम् । अथ ह्यर्द्धकौपीनवसनत्वोक्तिर्हि अकृतदुर्वाससः कौपीनकर्तनाभिप्राया, छिन्नदण्डवत्त्वोक्तिरपि ह्यकृतवेणुदण्डभेदनाभिप्राया । न च दुर्वाससाऽभ्यर्थिता यतयस्ताभ्यां छिन्नानि शिक्यदाम्नमयद्विदलकर्पटकौपीनकमण्डल्वादिकान्यादाय द्वारकां केशवदर्शनार्थं केशवाय तयोर्दुश्चरितमावेदयितुं च निर्जग्मुरिति हरिवंशे दशाधिकशततमेऽध्यायेऽभिहितत्वेन शिक्यादिषु परेषां यतीनां सम्बन्धसिद्ध्या न तेषु दौर्वाससत्वसिद्धिरिति सर्वं विकलाकूपविशरणायितप्रायम् । यथोक्तं तत्र दुर्वाससा यतीन् प्रति ।

इदमद्य मम विप्रा ! ध्यानमद्य विधीयताम् ।
साहसं यत्कृतं ताभ्यां पात्रभेदादिसत्तमा ! ॥
एतत्सर्वमशेषेण दर्शयाम जनार्दनम् ।
तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ॥
छिन्नं ताभ्यां समादाय द्रष्टुं केशवमाययुः । इति,

अत्र तथेति प्रतिज्ञाय यतय इत्यादिना छिन्नं सामग्रीजातमादाय केशवं द्रष्टुमाययुरिति दर्शनादानागमनक्रियाणामेककर्तृकत्वभानेन शिक्यादिषु यतीनां सम्बन्धसिद्ध्या अकिंचिदेतदिति वाच्यम् । प्रकरणानुग्रहेण स्पष्टं शिक्यादिषु दौर्वाससत्वसिद्ध्या छेदनानन्तरं छिन्नं शिक्यादिकं धर्मकार्यानुपयुक्तं केवलं भारायमाणमिति मार्गे शिष्येष्वन्यतमेषु कुलपतिना दुर्वाससा समर्पितमित्येतावतैव केशवदर्शनशिक्याद्यादानद्वारकाऽऽगमनक्रियाणामेककर्तृकत्वोपपत्तौ शिक्यादिष्वन्यसम्बन्धासिद्ध्या दौर्वाससत्वसिद्धेरवर्जनीयत्वात् । युक्तं चैतत् महान्तो हि शिष्येष्वनुग्रहबुद्ध्या सर्वदा यत्यादिना धारयितुमनावश्यकं शिक्यपूजापात्रादिकं शिष्येभ्योऽर्पयन्तीत्युभयलोकप्रा

किर्न्तु, सर्वदा धार्यं कौपीनत्रिदण्डकमण्डल्वादिकं तु स्वयमेव संकटेष्वपि बिभ्रति। अयमिह वर्तुलार्थः, पञ्चसहस्राणि स्वानुगतयतीनादायावस्थिते दुर्वाससि कालचोदितौ हंसडिम्भकौ तत्रागत्य विलक्षणवेषद्धपादिशालितां दुर्वाससोऽवेत्य तादृशाचारे वैदिकाचारविरोधमुद्भावयन्तौ तपस्विनं भृशमद्रुदुवतां, तन्नावधार्य धैर्यं विधार्य तूष्णीमवस्थितस्ततो निर्गन्तुकामौ बाहूवरुद्धौ मुनिश्छिन्नकौपीनतां नीतौ भर्त्सितस्ताभ्यां भ्रातरौ तदा तौ तस्मै चुक्रुधतुरत्र प्रववृताते तस्यैव त्रिदण्डशिक्यादिभेदने। यथोक्तमिह।

ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ।
शिक्यं कमण्डलुं चैव द्विदलं दारुमेव च॥
दण्डान् पार्श्वविशेषांश्च छित्वा भित्वा च सर्वशः। इति।

एवं चेह नान्येषां शिक्यादिचोटनानुप्रवेशसम्भवोऽपि पलायितानां यतीनां, तस्मादिह दण्डानिति बहुवचनमन्येषां यतीनां दण्डाभिप्रायकमित्यपि दुर्भणम्। अत एव द्वारकायां यादवाः।

अर्द्धकौपीनवसनं स्मरन्तं कमपि द्विजम्।
अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिम्॥

अद्राक्षुरित्युक्तं, न हि तत्र बहवश्छिन्नदण्डधरा ददृशिरे यतयो द्वारकायाम्। पूर्वसंजातां दुर्दशां स्मरन्तमत एवान्तस्तापसमायुक्तम् इत्युक्तम्। अन्ये तु दुर्वाससोऽनुगा यतयो नाभूवन्नेतादृशास्तेषां शिक्यकमण्डल्वादेस्त्रिदण्डादेर्वाऽभ्रंशादत एव द्वारकानुप्रवेशसमयेऽभूवंस्ते सुमनसो यथोक्तमिह प्रकरणे।

यतयो दीर्घतपसः पुरस्कृत्य तपोधनम्।
दुर्वाससं सुमनसो ददृशुर्यादवेश्वरम्॥ इति,

अत एव तु श्रीकृष्णाभ्यर्थनया आसनेष्वासनसमयेऽपि दुर्वाससो दौर्मनस्य परेषां च यतीनां सौमनस्यं श्रूयते यथोक्तमिह ।

तत: किंचिद्विवासीन आसने यतिविग्रह: ।
आसने संस्थिते तस्मिन् यतयो वीतमत्सरा: ॥
आसनानि यथायोगं भेजिरे निर्वृता: किल । इति,

अत्र यतिविग्रह इत्यनेन व्रतोपवासशीर्णशरीरत्वेन शरीरेणैव यतिरिति विज्ञातु शक्यो न तु चिह्नैस्तेषामशेषेण प्रभ्रष्टत्वादिति तात्पर्यम् । अन्ये यतयस्तु न तथा भूता: किंतु निर्वृता: सुस्थचित्ता: स्वासनानि यथायोग भेजिरे प्रतिपेदिरे इति स्फुटमुपपादिते दौर्मनस्यसौम*नस्ये दुर्वासस एव त्रिदण्डशिक्यादिभङ्ग साधयत इति कृतमिह स्वत:प्रकरणस्वरससिद्धेऽर्थे सूपपादनकौशलकौतुकेन ।

प्रकृतमनुसराम: छिन्नदण्डधरं यतिम् । अत्रत्यदण्डपदं त्रिदण्डपरमत्र तु दशाधिकशततमाध्याये पठितम् ।

ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ ।
शिक्यं कमण्डलुं चैव द्विदलं दारुमेव च ॥
दण्डान् पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्वश: । इति,

दण्डानिति बहुवचनमेव प्रमाणम् । दुर्वाससा द्वारकायां श्रीकृष्णसदर्शनसमये स्वयमभिहित वेणुकान् बहूनिति च । पूर्वमेव समगारिपि, अत्र च सप्ताधिकशततमाध्याये इहैव हरिवंशग्रन्थे रक्तकौपीनवसनो हंस: परम एव चेति वचनेन जाबालोपनिषदि जडभरतनिदाघरैवतकादिपरमहंसपङ्क्तौ दुर्वासस: सह पाठाच्च मुख्यपारमहंस्यसिद्धौ श्येनकेत्यादिदृष्टान्तेन दुर्वाससो गौणपारमहंस्योपपादन-

* दुर्वाससो दौर्मनस्यमन्येषां च सौमनस्यमित्यर्थ: ।

मप्यत्यन्तानभिज्ञतानिबन्धनमज्ञजन वञ्चनमात्रं कल्पतरु—परिमलादिकृताम्। यदपि श्वेतकेतुदृष्टान्तेन दार्ष्टान्तिकार्थसमर्थनं तदपि खपुष्पसमर्थनेन वन्ध्यापुत्रललाममालालम्बनम्। न हि छान्दोग्यादौ श्वेतकेतुर्ब्रह्मचर्यमुषासेत्युक्तमित्येतावता क्रमेण गार्हस्थ्यवानप्रस्थे नोपवस्तुं चक्षमे। नापि न संन्यासिष्यदिति प्राज्ञ उत्प्रेक्षितापि वक्तुम्। आश्रमाणां प्रातिलोम्यनिषेधेऽपि आनुलोम्यस्यानुमतत्वेन श्वेतकेतोः क्रमिकाणां ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमाणां सम्भवात्। एवं च छान्दोग्योदितब्रह्मचर्यस्येव जाबालोदितपारमहंस्यस्यापि मुख्यस्यैव सम्भवेन श्वेतकेतोर्गौणपारमहंस्याभिधाने श्रुतिसतीशरीरप्रपीडनकरं नृशंसैककृत्यमिति सुव्यक्तम्। न हि कृष्णा गौः पालनीयेति धूमलायामभिक्षेपः समुचितः। छान्दोग्यजाबालवाक्ययोः प्रामाण्याविशेषे छान्दोग्यानुरोधेन श्वेतकेतोर्ब्रह्मचर्यस्य सिद्धौ तदनन्तरं जाबालानुरोधेन पारमहंस्यस्यापि समाविष्टमुचितत्वेन लवणाबीजानवतारे गौणपारमहंस्योपवर्णनमनवधाननिबन्धनमिति नाव्यक्तं विदुषाम्। एवं च श्वेतकेतुदृष्टान्तावष्टम्भेन दुर्वाससो गौणपारमहंस्याभिधानं जलस्य स्वाभाविकोष्णस्पर्शत्वेन करकाया उष्णस्पर्शसाधनायितमिति विरम्यते। दुर्वासःप्रभृतीनां राजगृहेषु चिरं निवासः पुराणेषु श्रूयते इति तस्याश्रमविरुद्धत्वेन दुर्वासःप्रभृतयो नाश्रमेण परमहंसाः किन्तु गुणत इत्यप्यभिधानं द्रविडपुङ्गवस्य हासायैव, प्रत्यग्दृष्टयो हि वृत्त्या परमहंसाः समलोष्टाश्मकाञ्चना उन्मत्तवदाचरन्तः कस्य हेतो राजगृहेषु निवसेयुर्न हीष्टद्विष्टविरहिणां तेषां किञ्चिदुपादित्सितं परिजिहीर्षितमिष्टमनिष्टं वा यत्ते निविवत्सेयुर्जनाशयेषु अपहाय विविक्तान् नदीप्रस्रवणदेवखातगिरिगुहामहारण्यप्रदेशान्। प्रत्युत वृत्त्या अतथाभूता

लिङ्गिन एव प्रायो राजगृहाण्याहृत्याश्नुवन्तीति सर्वलोकप्रसिद्धम् । तस्माद् वृत्त्या पारमहंस्यं न राजगृहनिवासोपयिकं प्रत्युत तद्विरुद्धमिति अप्पयदीक्षितस्य साधुपाण्डित्यनिदर्शनम् । एवं चाधिकारिका दुर्वासःप्रभृतयो महर्षय इति तेषामधिकारसिद्धकार्यकरणे राजगृहनिवासो न प्रत्यवायाय नाप्याश्चर्याय प्रेक्षावताम् । यावदधिकारमवस्थितिराधिकारिकाणामित्युक्तन्यायेन आधिकारिकाणामधिकारनियकार्येषु इतरपुरुषापेक्षया वैलक्षण्यस्य सर्वसम्मतत्वात् । एवमेव तु बादरायणस्य दासीगर्भे विदुरोत्पादनं संगच्छते । एवं च पारमहंस्येऽपि स्वाश्रमविरुद्धानि राजगृहवासद्रौपदीमन्त्रदानादिकार्याणि दुर्वाससः सम्यगवकल्पन्ते । तदेवं सर्वोऽप्येष हंसडिम्भकोपाख्यानग्रन्थः परस्य सर्वथा विरुद्धोऽस्माकं तूपकरीत्येवोपक्रमोपसंहाराभ्यामादिलक्षणतात्पर्यग्राहकयावल्लिङ्गैर्पितस्त्रिदण्डशिक्यकमण्डलुकौपीनकन्थाभगवन्नारायणपूजापात्रादिस्वरूपायाः परमपद्धतिपरमहंसयत्यपेक्षितसर्वसामग्र्याः साधक इति कृतमिह स्वमुखेन निजविजयपटहकोलाहलाडम्बरप्रायेणानेन दैवहतेषु क्षते क्षारक्षोदक्षेपणायितेन क्षणिकामोदहेतुना परपराजयपरेण । शास्त्रविचारकौतुकेन भगवद्दासमुखास्वादिनां नः ॥

इदमप्यत्र मीमांसामहे, परमहंसयत्यपेक्षितसर्वसम्भारवर्णने ब्रह्मसूत्रमुपेक्षिष्ट हरिवंशाचार्य इति त्रिदण्डादिसिद्धावपि हरिवंशतः परमहंसस्योपवीतं सिध्यति न वेति । तत्र हरिवंशग्रन्थे उपवीतानुक्तिरेव दुर्वाससः उपवीतसाधिकेति प्रमाणमर्मज्ञाः । तथा हि हंसडिम्भकौ कदाचिदपि चतुर्थाश्रमधर्मान् नाप्योष्टां नाप्यद्राष्टां परमहंसानिति तेषां हंसपरमहंसयूथदर्शने गृहस्थापस्यपुरुषापेक्षयाऽतिवैलक्ष-

यद्दर्शने दुरदृष्टवशाद्राग. समुत्पेदे, स च रागो गृहस्थविलक्षणचिह्नच्युत्यैव प्राय शान्तिमिति शिक्यत्रिदण्डादिकमेव अपदध्यसाते, ब्रह्मसूत्र तु दुर्वाससो रक्षार्थे समभवत्तस्य गृहस्थसाधारण्यात् । यद्यपि गृहस्थन्यासिनो: सूत्रेऽप्यस्ति सख्याकृतो विशेषस्तथाऽपि क्रोधाविष्टयो हैपडिम्भकयोर्नाभूत्स लक्ष्य इति ब्रह्मसूत्र तो नामाङ्क्षामित्येव न किन्तु गृहस्थसाधारण्यज्ञानान्नास्याग्रहम् । तस्मादेवात्र प्रकरणे ब्रह्मसूत्रविषये हरिवंशाचार्य उदासाञ्चक्रे, अत एव श्रीमद्भागवते पुराणाचार्य. परमहंसानामुपवीत निह्नुयाञ्चक्रे इत्यन्यत्र निरूपितमस्माभि । पर तु तस्मिन् दौर्वाससे न्यासिवृन्दे सर्वे त्रिदण्डिन. सर्वे सशिखा ब्रह्मसूत्रवन्त इति न ज्ञायते यथाऽधिकारमेकदण्डिनि शिखानि सूत्राण्यपि तत्र सद्भावस्य तत्त्वत्याग्रस्वरसेन लभ्यत्वान्न हि युगान्तरेऽपि सर्वो जनस्त्रिदण्डाधिकारीत्यवकल्पते सत्त्वरजस्तम:प्रकृतिकत्वेन सर्वदैव विश्वस्य वैरूप्यात् । अत एव त्विह दशाधिकशततमाध्याये ।

अहोरात्रैश्च ते सर्वे द्वारका कृष्णपालिताम् ।
यदुदान्ता महात्मानो लोमशा: केशवर्जिता ॥

इति सशिखसर्वकेशधारिणस्त्रिदण्डिनो महात्मान एकदण्डिनश्च निष्केशा इति स्पष्ट, ततश्च त्रिदण्डैकदण्डयोरस्मदुक्तव्यवस्थैव सिध्यतीति निभृतमीक्ष्यता प्रमाणपरतन्त्रै ॥

यत्तु मदनपारिजाते चतुर्थाश्रमाधिकारमुद्दिश्य तत्र छन्दोगसूत्रकार: त्रयाणामधिकृति: ।

ब्राह्मण: क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ।

धर्मविवृतावपि ।

ब्राह्मण: क्षत्रियो वैश्यस्ततो गच्छेद्वन कृती ।
सन्यसेद्वासनाशान्त: सर्वभूतदयापर: ॥

इति त्रैवर्णिकस्याधिकारमेतानि वाक्यानि विदधति । अतस्त्रैवर्णिकानामपि तुर्याश्रमेऽस्त्येवाधिकारः । या तु जाबालश्रुतिः । ब्राह्मणाः प्रव्रजन्तीति तस्येयं गतिः ब्राह्मणशब्दः प्रदर्श*नार्थः । अतः क्षत्रियवैश्यावप्युपलक्षयति तेन न विरोध इति । अथ ब्रह्म वेदस्तन्निष्ठत्वादधीतवान् ब्राह्मण इति व्युत्पत्त्या ब्राह्मणशब्दो वर्णत्रयपरः । एतेन ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ।

इत्यादिमन्वादिवचनान्यपि व्याख्यातानि ।

यत्तु दत्तात्रेयवचनम् ।

मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानामयं धर्म्मो न विद्यते ॥ इति,

तथा—

गतिस्तुर्य्याश्रमे नास्ति बाहुजोरुजयोः क्वचित् ।
तुर्य्याश्रमे गतिः प्रोक्ता मुखजाना स्वयम्भुवा ॥ इति,

एतच्च वचनद्वयं वस्तुतो न विरुध्यते । मुखजाः ब्राह्मणाः । बाहुजाः क्षत्रियाः । ऊरुजाः वैश्याः एतेषामयं धर्म्मो लिङ्गधारणात्मको न विद्यते । लिङ्गं लक्षणं चिह्नं त्रिदण्डैकदण्डरूपम् ।

तथा च दक्षः ।

मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यज्ञवेदाद्यैर्नखरोमैर्वनाश्रितः ॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक्पृथक् ॥ इति,

* ब्राह्मणग्रहणार्थो नेतरनिषेधार्थस्तेन वचनान्तरानुरोधादपि क्षत्रियवैश्यावप्युपगृहीतौ भवत इति भावः ।

त्रिदण्डग्रहणमेकदण्डस्यापि प्रदर्शनार्थम् एवंविध क्षत्रियवैश्ययोर्नेति दण्डधारणनिषेध एव नाश्रमनिषेध । तथा च गतिस्तुर्य्याश्रमे नास्तीत्यस्याप्ययमर्थः । गतिर्ज्ञानम् सर्वे गत्यर्था ज्ञानार्था इति स्मरणात्, ज्ञान च ज्ञापकनिष्पाद्यमत एव ज्ञापककार्य्ये तत्, तेन ज्ञापकरूपेण कार्य्येण कारण लक्ष्यते, तथा चैतदुक्त भवति क्षत्रियवैश्ययोर्ज्ञापक दण्डधारण नास्तीति लिङ्गनिषेध एव न त्वाश्रमनिषेध इति दण्डधारण बहिरङ्गविषय विराग एव मुख्य. विरागाभावे अधिकाराभावात्, यत्तु धर्म्मविवृतावेव वचनान्तरम् ।

सन्यसेद्ब्राह्मणः सम्यग् वानप्रस्थो भवेन्नृप ।
वानप्रस्थो भवेद्वैश्य एव वर्णक्रम स्मृत ॥ इति,

अत्रापि ब्राह्मण. सम्यक् न्यसेदिति सम्यक्शब्दोपादानात् ब्राह्मणस्य बहिरङ्गभूतदण्डधारणोपेत एव सन्यासो न तु तद्रहित इति गम्यते । तथा च क्षत्रियवैश्ययोस्तद्रहित आश्रमो भवतीत्यर्थादुक्तम्भवति अन्यथा छन्दोगसूत्रकारादिवचनविरोधापत्ते । अय च तात्पर्य्यार्थः । अबाधेनोपपत्तौ बाधो न न्याय्य इति न्यायेन श्रुतिस्मृतिवाक्यविरोधपरिहाराय विधिवाक्यानामाश्रमस्वरूपविधौ तात्पर्य्यम् । निषेधवाक्यानान्तु दण्डग्रहणमात्रनिषेधे तात्पर्य्यं, तस्मात् क्षत्रियवैश्ययोर्दण्डग्रहणमात्रनिषेधो न त्वाश्रमनिषेध इति एव प्राप्तेऽभिधीयते ।

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । इति,

अतः श्रुत्यनुसारेण व्यवस्थाऽत्र विधीयते, ब्राह्मणा प्रव्रजन्तीति श्रूयते अत्र ब्राह्मणशब्दस्य ब्राह्मणत्व जातिर्वाच्योऽर्थे । ब्राह्मणोद्देशेन च प्रव्रज्या अभिधीयते उद्देश्यविशेषणमेव विवक्षित

इतिरुभयत्वमुद्देश्यमविवक्षितम् । तस्मादिह ब्राह्मणोद्देशेन संन्यासविधानादुद्देश्यस्य ब्राह्मणत्वस्येह विवक्षितत्वात्तस्यैव प्रव्रज्याधिकारो नान्यस्य, ननु यदि भवेद् ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्वाच्यार्थः तर्हि तस्योद्देश्यत्वेन विवक्षितत्वात् क्षत्रियवैश्ययोः प्रव्रज्यायां मा भूदधिकारः । न च तथा ब्राह्मणत्वं जातिरर्थः अपि तु ब्रह्मवेदस्तन्निष्ठास्तदध्ययनवन्तो ब्राह्मणा इति वेदाध्ययनवत्त्वमेकोऽनुगतो धर्मः । स च ब्राह्मणशब्दस्यार्थः । तथा च वेदाध्ययनवत्त्वरूपेणैकेनोपाधिना ब्राह्मणक्षत्रियवैश्यास्त्रयोऽपि क्रोडीभूता भवेयुः । एवं च ब्राह्मणोद्देशेन प्रव्रज्याविधानात् त्रयाणामपि वर्णानां तत्राऽधिकारोऽस्त्विति चेन्मैवम् । यथा क्षत्रियशब्दस्य क्षत्रियत्वमर्थः । वैश्यशब्दस्य वैश्यत्वं गोशब्दस्य च गोत्वमर्थः तथा ब्राह्मणशब्दस्यापि ब्राह्मणत्वमेवार्थ इति शेषे जैमिनिबादरायणादिभिरङ्गीकृत तद् व्याहन्येत, तद्व्याघातभयात् ब्राह्मणशब्दस्य-ब्राह्मणत्वं वेदाध्ययनवत्त्वं वोभयमिति वाच्यत्वेन परिकल्प्येत । तदन्याय्या चानेकार्थता इति तान्त्रिकैरनेकार्थत्वमेकशब्दस्य निषिद्धं तेन न्यायेन सह विरोधः प्रसज्यते । अथैवं ब्रूषे अन्याय्यं चानेकार्थत्वमिति न्याये जाग्रत्यपि गवादिशब्दानां यथाऽनेकार्थत्वमेवं ब्राह्मणशब्दस्यापि अनेकार्थत्वमस्त्विति न चैतदुचितमगतिका ह्रीयं गतिर्यदनेकशक्तिपरिकल्पनयाऽनेकार्थत्वस्वीकरणं शब्दार्थज्ञाने हि वृद्धव्यवहारः प्रमाणम् । वृद्धाश्च गवादिशब्दानामनेकशक्तिकल्पनयाऽप्यनेकार्थत्वमङ्गीकुर्वते न ब्राह्मणशब्दस्य अत एवाभिधानकारैरपि गवादिशब्दा अनेकार्थवर्गे परिगणितास्तेषामपि व्यवहारः शब्दग्रन्थादिष्वेव शास्त्रं निर्णीय, शास्त्रार्थपरिज्ञाने तु प्रविष्टस्यैव ग्रहणं नेतरस्य इतरस्यापि ग्रहणे

गोपगुविधायकवाक्येऽपि साक्षादुपेतगोपिण्डव्यतिरिक्तस्यापि ग्रहण स्यान्न च गृह्यते। तच्छास्त्रार्थनिर्णयेषु प्रसिद्धार्थस्यैव ग्रहण युक्तम्। विपरीतार्थद्योतकवाक्यशेषाभावादतोऽनेकार्थशक्तिकल्पनादोषभयाद् ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिरेवार्थः। ननु च जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते इत्यत्र ब्राह्मणशब्दो यथा यथैचयपर एवमत्राप्यस्त्विति चेन्नैवम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्तथा हि ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्य. प्रजया पितृभ्यः इति वाक्यशेषे ब्रह्मचर्य्यादिभिर्ऋण्याद्यृणत्रयापाकरणप्रतीतेर्ब्रह्मचर्य्यादिषु च त्रैवर्णिकस्याधिकारात् फलचमत्कारमनुसृत्यान्तरेण जायमानो वै ब्राह्मण इत्यत्रापि त्रैवर्णिकानुप्रवेशादुच्यते तत्र त्रैवर्णिकपरत्वम्। प्रकृते तु वाक्यशेषादाभावात्तत्रैवान्यो ब्राह्मणशब्देन प्रत्याख्यास्यते ततः पूर्वमेव लब्धार्थिकाया रूढेः प्राबल्यादनुपपत्यभावाच्च रूढ्या ब्राह्मणत्वमेव प्रत्याय्यते॥

अतश्च प्रथमप्रतीतब्राह्मणोद्देशेन प्रव्रज्याविधेश्चरितार्थत्वात् न चरमप्रतीतयौगिकार्थस्वीकरणमुचित ततश्च औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुत्या विरुद्धमौदुम्बरी सर्वा वेष्टयितव्येति स्मृतिवचन यथा विरोधाधिकरणे अप्रमाणमित्युक्तम्। यत्र ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतिविरुद्धं तत्र त्रयाणा वर्णाना वेदमधीत्य चत्वार आश्रमा इत्यादिक स्मार्तवचनजातमप्रमाणमेव स्मार्तवचननिचयस्य सर्वथा प्रामाण्यपरिजिहीर्षया श्रुत्यनुकूल एवार्थः परिकल्पनीयः, त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्रस्यायमर्थः त्रयाणा वर्णाना यथोचित चत्वार आश्रमा इति, औचित्यं च श्रुतिविरोधाद् ब्राह्मणस्यैव तुर्य्याश्रमाधिकारविधौ नान्यथा।

हविर्भयत्वयदुद्देश्यमविवक्षितम् । तस्मादिह ब्राह्मणोद्देशेन संन्या-
सविधानादुद्देश्यस्य ब्राह्मणत्वस्येह विवक्षितत्वात्तस्यैव प्रव्रज्याधि-
कारो नान्यस्य, ननु यदि भवेद् ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिर्वा-
च्यार्थः तर्हि तस्योद्देश्यत्वेन विवक्षितत्वात् क्षत्रियवैश्ययोः प्रव्रज्यायां
मा भूदधिकारः । न च तथा ब्राह्मणत्वं जातिरर्थः अपि तु ब्रह्मवे-
दस्तन्निष्ठास्तदध्ययनवन्तो ब्राह्मणा इति वेदाध्ययनवत्त्वमेकोऽनुग-
तो धर्मः । स च ब्राह्मणशब्दस्यार्थः । तथा च वेदाध्ययनवत्त्वरूपे-
णैकेनोपाधिना ब्राह्मणक्षत्रियवैश्यास्त्रयोऽपि क्रोडीभूता भवेयुः ।
एवं च ब्राह्मणोद्देशेन प्रव्रज्याविधानात् त्रयाणामपि वर्णानां
तत्राऽधिकारोऽस्त्विति चेन्नैवम् । यथा क्षत्रियशब्दस्य क्षत्रियत्व-
मर्थः । वैश्यशब्दस्य वैश्यत्व गोशब्दस्य च गोत्वमर्थः तथा ब्राह्म-
णशब्दस्यापि ब्राह्मणत्वमेवार्थ इति शेषे जैमिनिबादरायणादिभि-
रङ्गीकृत तद् व्याहन्येत, तथोक्तव्याघातभयात् ब्राह्मणशब्दस्य-
ब्राह्मणत्वं वेदाध्ययनवत्त्वं चोभयमिति वाच्यत्वेन परिकल्प्येत ।
तदन्याय्या चानेकार्थता इति तान्त्रिकैरनेकार्थत्वमेकशब्दस्य नि-
षिद्धं तेन न्यायेन सह विरोधः प्रसज्यते । अथैवं ब्रूषे अन्याय्यं
चानेकार्थत्वमिति न्याये जाग्रत्यपि गवादिशब्दानां यथाऽनेका-
र्थत्वमेवं ब्राह्मणशब्दस्यापि अनेकार्थत्वमस्त्विति न चेत्तदुचि-
तमगतिका हीयं गतिर्यदनेकशक्तिपरिकल्पनयाऽनेकार्थत्वस्वीकरणं
शब्दार्थज्ञाने हि वृद्धव्यवहारः प्रमाणम् । वृद्धाश्च गवादि-
शब्दानामनेकशक्तिकल्पनयाऽप्यनेकार्थत्वमङ्गीकुर्वते न ब्राह्मणश-
ब्दस्य अत एवाभिधानकारैरपि गवादिशब्दा अनेकार्थवर्गे परि-
गणितास्तेषामपि व्यवहारः शब्दश्लेषादिष्वेव शास्त्रं निर्णीय,
शास्त्रार्थपरिज्ञाने तु प्रसिद्धस्यैव ग्रहणं नेतरस्य इतरस्यापि ग्रहणे

गोपशुविधायकवाक्येऽपि सास्नाद्युपेतगोपिण्डव्यतिरिक्तस्यापि ग्रहण स्यान्न च गृह्यते । तच्छास्त्रार्थनिर्णयेषु प्रसिद्धार्थस्यैव ग्रहण युक्तम् । विपरीतार्थद्योतकवाक्यशेषाभावादतोऽनेकार्थशक्तिकल्पनादोषभयाद् ब्राह्मणशब्दस्य ब्राह्मणत्वं जातिरेवार्थः । ननु च जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवाँजायते इत्यत्र ब्राह्मणशब्दो यथा वर्णत्रयपर एवमत्राप्यस्त्विति चेन्नैवम्, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् तथा हि ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति वाक्यशेषे ब्रह्मचर्यादिभिर्ऋण्यापाकरणप्रतीतेर्ब्रह्मचर्यादिषु च त्रैवर्णिकस्याधिकारात् फलचमसवन्मुख्यान्तरेण जायमानो वै ब्राह्मण इत्यत्रापि त्रैवर्णिकानुप्रवेशादुच्यते तत्र त्रैवर्णिकपरत्वम् । प्रकृते तु वाक्यशेषाद्यभावात्तेषान्यो ब्राह्मणशब्देन प्रत्याख्यास्यते ततः पूर्वमेव लब्धाधिकाया रूढेः प्राबल्यादनुपपत्त्यभावाच्च रूढ्या ब्राह्मणत्वमेव प्रत्याय्यते ॥

अतश्च प्रथमप्रतीतब्राह्मणोद्देशेन प्रव्रज्याविधेश्चरितार्थत्वात् न चरमप्रतीतयौगिकार्थस्वीकरणमुचितं ततश्च औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुत्या विरुद्धमौदुम्बरी सर्वा वेष्टयितव्येति स्मृतिवचन यथा विरोधाधिकरणे अप्रमाणमित्युक्तम् । एव ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतिविरुद्धं तत्र त्रयाणा वर्णाना वेदमधीत्य चत्वार आश्रमा इत्यादिकं स्मार्तवचनजातमप्रमाणमेव स्मार्तवचननिचयस्य सर्वथा प्रामाण्यपरिजिहीर्षया श्रुत्यनुकूल एवार्थः परिकल्पनीयः, त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्रस्यायमर्थः त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति, *औचित्यं च श्रुतिविरोधाद् ब्राह्मणस्यैव तुर्याश्रमाधिकारविधौ* नान्यथा ।

वेदार्थविज्ञानां संन्यासो विद्यते नात्र संशयः ।
शिखायज्ञोपवीतानां त्यागपूर्वं कटदण्डयुक् ॥ इति

ब्रह्माण्डपुराणवचनमपि छन्दोगसूत्रेण समानार्थम् ।

यत्तु ब्रह्मवैवर्तवचनम् ।

वैराग्योत्पत्तिमात्रेण सन्यासे परियुज्यते ।
रागवांस्तु विप्रोऽपि वेदवेदाङ्गवित्तमः ॥ इति,

वेदवेदाङ्गवित्तमोऽपि विप्रो रागवांश्चेत्संन्यासे न परियुज्यत इत्यन्वयः, एवं च विप्रस्य विरक्तस्यैवाधिकारोऽभिहितो भवेन्न क्षत्रियादेः । यत्तु स्मृत्यन्तरम् ।

यज्ञवचनमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात् ॥

इत्यस्यायमभिप्रायः गृहात्प्रव्रजेत् वानप्रस्थाश्रममनुष्ठेत् । प्रव्रज्या-शब्दो यद्यपि संन्यासे रूढस्तथापि श्रुतिविरोधपरिहारार्थमत्र तृतीयाश्रमपरः । अन्यापि वैराग्यहेतुकत्वात्, यद्वा ब्राह्मणः स्ववृत्त्याऽजीवन् क्षत्रियवृत्तिमाश्रितः । तथाऽप्यजीवन् वैश्यवृत्तिं तत्तच्च तावद् निस्तीर्यं च न यावत्स्ववृत्तिं परित्यजति किन्तु तथैव वृत्त्यवस्थितस्तदा तत्तत्क्षत्रियादिवृत्तिः क्षत्रिय इति वैश्य इति च व्यपदिश्यते शास्त्रानुष्ठानकालेऽपि क्षत्रियादिवृत्तिनिरतत्वात् ततः सोऽपि प्रव्रजेद्गृहादिति प्रव्रज्याधिकारं दर्शयति ।

अत एव ।

ब्राह्मणः क्षत्रियो वा ऽथ वैश्यो वा प्रव्रजेद्गृहात् ।

इत्यत्र–शब्द प्रयोगः ब्राह्मण एव अनन्तर क्षत्रवृत्त्याश्रयात् क्षत्रियः, अथ वैश्य इत्यानन्तर्यार्थनिपातस्यार्थसमर्थो गम्यते दर्शितः । एतेन ।

ब्राह्मणाः क्षत्रियोवैश्यस्तो गच्छेद्वनङ्गती ।

सन्यसेद्ब्राह्मणाश्चान्त , इत्येतमदपि व्याख्यातम् ॥

यच्च मनुदत्तात्रेयादिवचनान्यप्यनुकूल्य मेधानि ।

यश्च जडभरतमप्युपदेशः पैङ्गिरहस्ये ।

यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भवेति, अत्रेदं चिन्त्यं किं जडभरतं प्रत्येवोपदेश उत लक्षणया क्षत्रियमात्रमपि आद्ये जडभरतस्यैवेति नेतरक्षत्रियप्राप्तिः । किञ्च जडभरतोऽपि प्रैषोच्चारणपूर्वकमाश्रमं गृहीतवान् इति न क्वापि श्रूयते, ततो ब्राह्मणाः प्रव्रजन्ति इत्येतदनुरोधात्परमहंसो भवेत्यस्यायमर्थः परमहंस इव निर्ममो भवेति, नापि द्वितीयः, तत्र हि लक्षणा सा च न युक्ता न विधौ लक्षणेति भट्टगुरुप्रभृतिभिर्विधौ लक्षणानिषेधात् । विधिरिति वदन् वादी प्रष्टव्यः किं विशिष्टविधिः उत प्राप्ते कर्मण्यधिकारविधिरिति ।

पक्षद्वयेऽपि लक्षणाप्रसक्तिर्दुर्वारा । ननूद्देश्ये लक्षणा न विधयेऽतो न दोष इति चेत्तर्हि लक्षणोद्देश्येऽपि न युक्तेति ब्रूमः । तथा हि सम्बन्धानुपपत्तिभ्यां हि लक्षणा न चानुपपत्तिः पूर्वोक्तरीत्या वाक्यस्यार्थान्तरपरतयाऽप्युपपत्तेः ।

या च जाबालश्रुतिर्जनकयाज्ञवल्क्यसंवादे तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासोऽ*ऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतय इति अत्रापि विधायकप्रत्ययाभावात् परमहंसवद्दृश्यधर्मवन्त इति अहङ्कारममतयोरभावात्परमहंसा इति व्यपदिश्यन्ते । तस्मात्सिद्धो ब्राह्मणस्यैवाधिकार इति ।

* केषुचिदादर्शेषु दुर्वासऋभुनिदाघ इति पाठः ।

इत्येवमन्तेन ग्रन्थेन क्षत्रियवैश्ययोरलिङ्गसंन्यासं पूर्वपक्षतयोपन्यस्य महतीमारभटीमारचय्य सर्वथा चतुर्थाश्रमानधिकार उपपादितस्तत्र क्षत्रियवैश्ययोः सलिङ्गसंन्यासबोधकश्रुतिस्मृतिसूत्रेतिहासपुराणानां दर्शितत्वादकिंचिदिदमिति ब्रूमहे, तथा हि पैङ्गिरहस्यब्राह्मणे यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भवेति, अत्र भवेतिविधिप्रत्ययघटिततादृशवाक्येन स्मृतिसूत्रेतिहासाद्युपबृंहितेन क्षत्रियस्य पारमहंस्यविधानादस्यैव तुरीयाधिकारः सिध्यति । न च जडभरतमुद्दिश्याभिहितस्य परमहंसो भवेति वाक्यस्य क्षत्रियमात्रस्याधिकारबोधकत्वाङ्गीकारे लक्षणैव शरणं न च तद्युज्यते गुरुभट्टप्रभृतिभिर्विधौ लक्षणानभ्युगमात् । लक्षणानभ्युपगमे च पूर्वोक्तवाक्याज्जडभरतस्यैवाधिकारसिद्धिरिति न किंचिदेतदिति वाच्यम्, जाबालश्रुतौ निदाघरैवतकप्रभृतीनां परेषामपि क्षत्रियाणां पारमहंस्याभिधानाल्लक्षणायाश्चावश्यकत्वेन तस्या अत्र दोषत्वानङ्गीकारात् । न हि लक्षणेत्येव दोषस्तथा सति तस्या वृत्तित्वोच्छेदप्रसङ्गात् किन्तु तात्पर्याविषयार्थबोधकत्व एव तस्या दोषत्वं, प्रकृते च जाबालोदितनिदाघप्रभृतिक्षत्रियाणां पारमहंस्यस्यावयोरुभयोरेवाङ्गीकरणीयतया तस्य च लक्षणामन्तरेण निर्वोढुमशक्यतया तस्या बुबोधयिषितार्थबोधकत्वेन दोषत्वानङ्गीकारात् । विध्यंशे लक्षणाया दोषत्वेऽपि प्रकृते उद्देश्यांशे तस्याः कथंचिदपि दोषत्वस्य वक्तुमशक्यत्वाच्च ।

जाबालश्रुतेः सिद्धार्थानुवादकत्वेन निदाघजडभरतप्रभृतयः परमहंसा इत्यस्य परमहंससदृशा इत्यर्थकथनं तु साहसिकतामात्रनिबन्धनं, पैङ्गिरहस्यब्राह्मणे स्पष्टं विध्युपलम्भेन तत्सहकृतायामस्यां सादृश्यार्थकथनकदर्थनस्य प्राचेन शङ्कितुमप्ययुक्तत्वात् द्विजा-

नामनाश्रमावस्थाननिषेधेन तेषां तुरीयाश्रमानधिकारे तदीयाश्रमस्य क्वचाप्यन्तर्भावयितुमशक्यत्वेन अनाश्रमित्वापत्तेश्च, जडभरतप्रभृतीनां पञ्चमाश्रमत्वमत्याश्रमित्वादिकं च यल्लोके कदाचिच्च शास्त्रे प्रसिध्यति तस्य तु तेषां नियतदेहाननुसन्धानेन अनियतवर्णाश्रमधर्मत्वमात्र एव तात्पर्यमिति न ततस्तेषां कश्चिदतिरिक्त आश्रमः पञ्चमः सिध्यति । एतेन जाबालश्रुतिवाक्यस्यपरमहंसपदस्याहङ्कारममकाररराहित्यमात्रेण तादृशव्यपदेशसमर्थनमपि प्रत्यादिष्टं वेदितव्यम् । जाबालोपनिषदि एकस्यामेव पङ्क्तौ सहैवैकत्र पठितेषु भरतनिदाघरैवतकादिषु क्षत्रियेषु परमहंसशब्दस्य लाक्षणिकार्थावलम्बनेन तत्रैव च श्वेतकेतुदुर्वासःप्रभृतिषु ब्राह्मणेषु तस्य मुख्यार्थकथनेन च युगपद्वृत्तिद्व*यविरोधात् सर्वेषामेकरूप्येण वाऽहङ्कारममकारराहित्यमात्र एव तात्पर्यकल्पने त्वकारणलक्षणावलम्बनस्यैव दोषतायाः सुव्यक्तत्वाच्च । भरतनिदाघादीनां राजर्षीणां विशिष्य संन्यासचिन्हाश्रवणं तु तेषां विशिष्य निश्वासादिप्रयत्नाश्रवणवदेवोपपद्यते । न हि ते मुखेन निशश्वसुरिति न श्रूयते चेत्तेषां निश्वासप्रयत्नस्तावता कथं सिध्यति अलौकसामान्यानामपि तेषां व्यवहारस्यासति बाधके लोकरीत्यैवोहनीयत्वात् ।

तस्माद्दुर्वाससा श्वेतकेतुना च सहपठितानां भरतनिदाघरैवतकादिराजर्षीणां पारमहंस्ये समोऽधिकारः केवलं विदद्वेकदण्डकृत एव तु विशेष इत्यन्यत्र निरूपितमेव ।

गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित् ।
तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयम्भुवा ॥

* एकैकपदस्य एकैकावसरे वृत्तिद्वयं न भवति, तथैकवाक्यस्यपदेष्वप्येकत्र लक्षणा परत्र च शक्तिरिति वैचित्र्यं विना फलं न भवतीति भावः ।

इत्येतदपि विशेषवाक्यानुसारेण विदण्डनिषेधपरमेव न तु सामान्यतोन्यासनिषेधकं तस्य वचनान्तरेण साधितत्वात् ।

सन्यसेद् ब्राह्मणः सम्यग् वानप्रस्थोभवेन्नृपः ।

वानप्रस्थोभवेद्वैश्य एवं वर्णक्रमः स्मृतः ॥

इत्येतदपि ब्राह्मणानां त्रिदण्डसंन्यासविधायकं पूर्वोक्तवचनैकवाक्यतया तेषामेव तदधिकारित्वात्, इदमेव तु ब्राह्मणः सम्यगित्यनेन विवक्षितं सम्यक्त्वं यन्मुख्यत्रिदण्डाधिकारित्वं, क्षत्रियोर्वोनप्रस्थाश्रमाद्यधिकारित्वाभिधानं तु न तयोस्तुरीयानधिकारिताख्यापनपरं तयोस्तुरीयाश्रमस्य वचनान्तरसिद्धत्वात् । किं तु यथाभूतार्थाख्यानमात्रपरम् अत एव छन्दोगगृह्ये । वेदमधीत्य त्रयाणां चत्वार आश्रमाः । इति पठन्ति गृह्यसूत्रकाराः, अथ च विद्वं साध्यायोपयुज्यत इति न्यायेन चातुराश्रम्याधिकारितावच्छेदकं वेदाध्ययनमिति सिध्यति । मलिनं ते वपुः स्नाया इत्यादौ वपुर्मालिन्यस्येव स्नानाधिकारितावच्छेदकत्व, ततश्च यानुद्दिश्य वेदाध्ययनं विहितं त एव त्रैवर्णिकाश्चातुराश्रम्येऽधिकारिण इत्यर्थादुक्तं भवति, संवदन्ति चामुमेवाधिकारम् ।

ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती ।

संन्यसेद्वासनाशान्तः सर्वभूतदयापरः ॥

ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ।

इत्यादिस्मृतयः पुराणवचनानि च ॥

अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः ।

इष्ट्वा च शक्तितोयज्ञैर्मनो मोक्षे निवेशयेत् ॥

अनधीत्य गुरोर्वेदानुत्पाद्य तथाऽऽत्मजान् ।

अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥

इति स्मृतिवचनयुगलमप्यन्वयव्यतिरेकद्वारा मोक्षाश्रमे अध्ययनाद्यधिकारिणामेव कृतर्णापाकरणानामधिकारित्वं द्रढयति । जायमानो ह वै ब्राह्मणस्त्रिभिरिति ऋणानुशासनवाक्ये च ब्राह्मणपदस्योपलक्षकतया निर्विवादतया ऋणापाकरणाधिकारिणामेव च मोक्षाश्रमावलम्बनाधिकारितया द्विजातिविषयस्य सन्यासो धर्म्य इति सिध्यति । न च प्रपन्नानां महाभारतादिषु यथोचितस्वाश्रमकर्मनिष्ठा*नां मोक्षश्रवणान्न मोक्षपदेन सन्यासग्रहणं युज्यत इति वाच्यम् । यतोऽस्तु विनाऽपि संन्यासं मोक्षस्तथापि न्यासे मुमुक्षुमात्रस्यैवाधिकारितया मुमुक्षायाश्च ऋणत्रयापाकरणपूर्विकाया एवोपयोगितया ऋणत्रयापाकरणस्य च द्विजात्यधिकारिकतया द्विजातीनामेव मोक्षाश्रमाधिकारित्वसिद्धिः । एव च क्षत्रविशोरपि सलिङ्ग एव सन्यासः सिध्यति निषेधवाक्यानां तु त्रिदण्डपरतेति बहुधोपपादितम् । क्षत्रविशोः स्मृतिषु विशिष्य त्रिदण्डनिषेधात् । यत्तु क्षत्रविशोरलिङ्गसंन्यासोऽप्यस्तुत्यद्भिर्मदनपारिजातकारैर्ब्राह्मणाः प्रव्रजन्तीति श्रुतौ ब्राह्मणोद्देशेन प्रव्रज्याविधानादुद्देश्यविशेषणस्यावश्य विवक्षणीयतया ब्राह्मणेतरस्य नाधिकारः प्रव्रज्यायामिति क्षत्रियादीनामलिङ्गोऽपि न्यासो न सिध्यतीत्युक्तम् ।

तथेद विचार्यते पैङ्गिरहस्यब्राह्मणे जडभरतमुद्दिश्य पारमहंस्यविधिदर्शनात्, जाबालश्रुतौ च श्वेतकेत्वादिभिर्ब्रह्मर्षिभिः सहैव निदाघजडभरतादिराजर्षीणामपि पारमहंस्याम्नानात्पैङ्गिस्यविधिवाक्यस्य अवश्यं निदाघादिसंग्राहकतायामविप्रतिपत्तेर्वक्तव्यत्वेन क्षत्रियस्य संन्यासो धर्म्य इत्यवश्यमास्थेयमन्यथा विधिवैरूप्यकल्पनाप-

* पाठकृतस्त्वयाठो च पदस्योऽपि विमुच्यते । इति ।

नेरिति, ब्राह्मणाः प्रव्रजन्तीति श्रुतौ चाजहत्स्वार्थवृत्त्या ब्राह्मणपदस्य द्विजात्युपलक्षकत्वेऽपि उद्देश्यविशेषणस्य ब्राह्मणत्व*स्यापरित्यागेन न काचिदुपप्लवसम्भावनेति युक्तः क्षत्रियस्य सलिङ्गसंन्यासः ।

न च पारमहंस्यस्यालिङ्गतयाऽपि सम्भाव्यमानत्वेन सिद्धेऽपि क्षत्रियस्य पारमहंस्याधिकारे सलिङ्गसंन्यासस्तावतापि क्षत्रियस्य न सिध्यतीति वाच्यम् । दत्तात्रेयदुर्वासःप्रभृतीनां परमहंसानां जडभरतादिपङ्क्तौ पठितानां श्रुतिस्मृतिषु दण्डाद्याम्नानात् तथा चारुणिश्रुतिः परमहंसमुद्दिश्य दण्डमाच्छादनं कौपीनं परिगृहेत् शेषं विसृजेत् । इति । ततश्च सिद्धः क्षत्रियस्य सलिङ्गसंन्यासः ।

वस्तुतस्तु ब्राह्मणाः प्रव्रजन्तीति श्रुतौ ब्राह्मणपदस्याजहत्स्वार्थवृत्तिकल्पनामपेक्ष्य पैङ्गिरहस्यारुणिश्रुत्याद्युपरोधोगुरुतरदोष इति ब्राह्मणपदस्योपलक्षणतापक्ष एव युक्तो वाक्यविरोधे पदस्य जघन्यवृत्तिकल्पनाया पर युक्तत्वात् ।

यदि त्वन्तःप्रविश्य परीक्ष्येत तदा ब्राह्मणपदेन क्षत्रियवैश्ययोर्बोधे जघन्यवृत्तिकल्पनाऽपि न भवति वृद्धव्यवहारस्यैव प्रयोगे शरणीकरणीयत्वात्, अस्ति च क्षत्रियवैश्ययोर्ब्राह्मणपदेन वैदिको व्यवहारस्तथा हि शुक्लयजुर्वेदिनां शतपथब्राह्मणम् । अथाद्धा जायते यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्राह्मणो हि जायते यो यज्ञाज्जायते, इति ।

एवं च ब्राह्मणपदेनाविप्रतिपन्नवैदिकव्यवहारयोगिनोः क्षत्रियविशोरिह प्रव्रज्याविधायकश्रुतौ ग्रहणं युक्तमेव वैदिकव्यवहारस्य सर्वापेक्षया बलवत्त्वात् । यथाहुर्वृद्धाः ।

* अजहत्स्वार्थलक्षणायामेवोद्देश्यविशेषणपरित्यागेनाजहत्स्वार्थायामिति भाव ।

गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ इति,

न च ब्राह्मणपदेन चतुर्विशेषार्थग्रहणे व्यवहारसाङ्कर्यप्रसङ्गो दोषायेति वाच्यम् । यतो वर्णत्वव्याप्यविप्रत्वरूपधर्मावच्छिन्नबोधयितव्यस्थले ब्राह्मणपदेन त्रयादिव्यावृत्तधर्मावच्छिन्नस्य तात्पर्यबलाद् बोधेऽपि तात्पर्यग्राहकमानान्तरसमवधानासमवधानाभ्यामेकस्मादपि ब्राह्मणपदात्तादृशबोधाबोधयोरुपगमेनातिप्रसङ्गशङ्कायाः सर्वथाऽनुदयात् । एवमेव तु भवताऽपि जायमानो ह वै ब्राह्मण इति श्रुतौ ब्राह्मणपदेन वर्णत्रयं विवक्ष्यते तत्र ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति वाक्यशेषे ब्रह्मचर्यादिभिर्ऋणत्रयापाकरणप्रतीतेर्ब्रह्मचर्यादिषु च त्रैवर्णिकानां सर्वेषामविशेषेणाधिकारित्वात् ।

यथा वा पूर्वस्मिन् काण्डे प्रोद्गातॄणां फलचमसभक्षणाभिधानेऽपि तत्र गमकान्तरसद्भावेन होत्रादीनामपि फलचमसभक्षणाधिकारित्वसिद्धान्तस्तावत्यस्य प्रोद्गातृपदस्य होत्रादिसाधारण्येनार्थबोधकत्वादेवं पूर्वोक्तजाबालपैङ्गिरहस्यासुविश्रुत्याद्युपष्टम्भबलादिहापि ब्राह्मणपदं शतपथब्राह्मणाभिहितसंस्कारावच्छिन्नब्राह्मणपरमिति तेनाऽनन्यस्यैव ब्राह्मणपदाद् द्विजातिमात्रावगमो नैव कथमपीदपि शङ्काविषयस्तुरीयविद्यावृद्धानाम् ।

न च शतपथब्राह्मणे 'अथैनं देवेभ्य आवेदयति दीक्षितोऽयं ब्राह्मणः' इति वाक्येन यागार्थे दीक्षितस्य यजमानस्य देवेभ्यो दीक्षितत्वावेदनं बोध्यते तत्र त्रिवर्णैकर्तृकयागे देवेभ्यो दीक्षितत्वावेदनमन्त्रे ब्राह्मणत्वजात्यवच्छिन्नवाचकं ब्राह्मणपदं न प्रयोक्तव्य-

त्तेरिति, ब्राह्मणाः प्रव्रजन्तीति श्रुतौ चाजहत्स्वार्थवृत्त्या ब्राह्मणपदस्य द्विजात्युपलक्षकत्वेऽपि उद्देश्यविशेषणस्य ब्राह्मणत्व*स्यापरित्यागेन न काचिदुपप्लवसम्भावनेति युक्तः क्षत्रियस्य सलिङ्गसंन्यासः ।

न च पारमहंस्यस्यालिङ्गतयाऽपि सम्भाव्यमानत्वेन सिद्धेऽपि क्षत्रियस्य पारमहंस्याधिकारे सलिङ्गसंन्यासस्तावतापि क्षत्रियस्य न सिध्यतीति वाच्यम् । दत्तात्रेयदुर्वासःप्रभृतीनां परमहंसानां जडभरतादिपङ्क्तौ पठितानां श्रुतिस्मृतिषु दण्डाद्याम्नानात् तथा चारुणिश्रुतिः परमहंसमुद्दिश्य दण्डमाच्छादनं कौपीनं परिगृहेत् शेषं विसृजेत् । इति । ततश्च सिद्धः क्षत्रियस्य सलिङ्गसंन्यासः ।

वस्तुतस्तु ब्राह्मणाः प्रव्रजन्तीति श्रुतौ ब्राह्मणपदस्याजहत्स्वार्थवृत्तिकल्पनामपेक्ष्य पैङ्गिरहस्यारुणिश्रुत्याद्युपरोधोगुरुतरदोष इति ब्राह्मणपदस्योपलक्षणतापक्ष एव युक्तो वाक्यविरोधे पदस्य जघन्यवृत्तिकल्पनाया एव युक्तत्वात् ।

यदि त्वन्तःप्रविश्य परीक्ष्येत तदा ब्राह्मणपदेन क्षत्रियवैश्ययोर्बोधे जघन्यवृत्तिकल्पनाऽपि न भवति वृद्धव्यवहारस्यैव प्रयोगे शरणीकरणीयत्वात्, अस्ति च क्षत्रियवैश्ययोर्ब्राह्मणपदेन वैदिको व्यवहारस्तथा हि शुक्लयजुर्वेदिनां शतपथब्राह्मणम् । अथाद्धा जायते यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्राह्मणो हि जायते यो यज्ञाज्जायते, इति ।

एवं च ब्राह्मणपदेनाविप्रतिपन्नवैदिकव्यवहारयोगिनोः क्षत्रविशोरिह प्रव्रज्याविधायकश्रुतौ ग्रहणं युक्तमेव वैदिकव्यवहारस्य सर्वापेक्षया बलवत्त्वात् । यथाहुर्वृद्धाः ।

* जहत्स्वार्थलक्षणायामर्थैकदेशविशेषणपरित्यागेनाजहत्स्वार्थायामिति भावः ।

गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥ इति,

न च ब्राह्मणपदेन वर्णविशेषग्रहणे व्यवहारसाङ्कर्यप्रसङ्गो दोषायेति वाच्यम् । यतो वर्णत्वव्याप्यविप्रत्वरूपधर्मावच्छिन्नबुबोधयिषास्थले ब्राह्मणपदेन वर्णादिव्यावृत्तधर्मावच्छिन्नस्य तात्पर्यवशाद् बोधेऽपि तात्पर्यग्राहकमानान्तरसमवधानासमवधानाभ्यामेकस्मादपि ब्राह्मणपदात्तादृशबोधाबोधयोरुपगमेनातिप्रसङ्गशङ्कायाः सर्वथाऽनुदयात् । एवमेव तु भवतापि जायमानो ह वै ब्राह्मण इति श्रुतौ ब्राह्मणपदेन वर्णत्रयं विवक्ष्यते तत्र ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इति वाक्यशेषे ब्रह्मचर्यादिभिर्ऋण्यादृणत्रयापाकरणप्रतीतेर्ब्रह्मचर्यादिषु च त्रैवर्णिकानां सर्वेषामविशेषेणाधिकारित्वात् ।

यथा वा पूर्वस्मिन् काण्डे प्रोद्गातॄणां फलचमसभक्षणाभिधानेऽपि तत्र गमकान्तरसद्भावेन होत्रादीनामपि फलचमसभक्षणाधिकारित्वसिद्धान्तस्तत्रत्यस्य प्रोद्गातृपदस्य होत्रादिसाधारण्येनार्थबोधकत्वादेवं पूर्वोक्तवाचलपैङ्गिरहस्यादिश्रुत्याद्युपष्टम्भबलादिहापि ब्राह्मणपदं शतपथब्राह्मणाभिहितसंस्कारावच्छिन्नब्राह्मणपरमिति तेनाञ्जस्येनैव ब्राह्मणपदाद् द्विजातिमात्रावगमो नैव कथमपीषदपि शङ्काविषयस्त्वपीविद्यावृद्धानाम् ।

न च शतपथब्राह्मणे 'अथैनं देवेभ्य आवेदयति दीक्षितोऽयं ब्राह्मणः' इति वाक्येन यागार्थं दीक्षितस्य यजमानस्य देवेभ्यो दीक्षितत्वावेदनं बोध्यते तत्र क्षत्रियवैश्यकर्तृकयागे देवेभ्यो दीक्षितत्वावेदनमन्त्रे ब्राह्मणत्वजात्यवच्छिन्नबोधकं ब्राह्मणपदं न प्रयोक्तव्य-

मित्येव प्राप्नोति । नाप्यूहेन तत्र क्षत्रियादिपदप्रयोगः, ऊहस्याप्रामाणिकत्वादितिकिंकर्तव्यताव्यामोहसमुपस्थितौ यो यन्नाज्जायतइत्यर्थवादबलोपेतविधिना तत्र क्षत्रियवैश्ययोरपि ब्राह्मणपदेन मान्त्रिकव्यवहार इति व्यवस्थाप्यते तथा च न तद्दृष्टान्तावष्टम्भेन सर्वत्र तथा वक्तुं पार्यते तथा सति व्यवहारसाङ्कर्यप्रसङ्गात्, प्रकृते तु ब्राह्मणाः प्रव्रजन्तीति श्रुतिर्जातिब्राह्मणमुपादाय विहितविधेयेति कृतकृत्या नाधिकमाकाङ्क्षितुं क्षमेति तद्दृष्टान्तेन कथं राजन्यवैश्यावधिकुर्यातां पारिव्राज्ये इति वाच्यम् । पैङ्गिरहस्यब्राह्मणे जडभरतमुद्दिश्य पारमहंस्यविधेरेव क्षत्रियादेरधिकारावगमकतया शातपर्यन्तौ [illegible] वतारस्य समुचितत्वात् । अत एव तु जाबालाः । तत्र परम [illegible] संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयः इति मुक्ताप्र [illegible] न्यायेन ब्राह्मणविधात् एकस्मिन्नेव वाक्ये परमहंसानामनन्ति, न च तेषां पारमहंस्यं न मुख्यं विधिविहितं किन्तु गौणमिति वक्तुं शक्यं तथा सति मुख्यपरमहंसकथाया एव जगति समुच्छेदात् । विना बाधकावतारं तादृशकल्पनायाः श्रुत्यक्षरोपमर्दकत्वापाताच्च । न च तत्पङ्क्तिपठितस्य श्वेतकेतोर्ब्रह्मचर्यादेः श्रुतत्वेन प्रामाणिकत्वेऽपि संन्यासस्याश्रवणात् पारमहंस्यं गौणमिति वाच्यम् । पारमहंस्यश्रवणस्यैव गमकत्वात् । न हि वत्सतरीजिघांसया गौर्वितीर्यते न हि ब्राह्मणाः प्रव्रजन्तीति श्रुतिस्थब्राह्मणपदस्य मुख्यत्वं संरक्षणीयमिति श्रुत्यन्तरस्थपारमहंस्यं गौणमिति कोविदकल्पना । न च विनिगमकविरहादेव पारमहंस्यं गौणं ब्राह्मणपदन्तु मुख्यार्थमिति वैपरीत्यं कुतो न स्यात् । न हि पारमहंस्यस्य मुख्यत्वे कश्चन विशेषमालोचयाम इति तु दुर्धियश्चोद्यम् ।

पारमहंस्यस्य गौणत्वमुपकल्प्य सर्वोपमर्दापेक्षया अणुरपि विशेषोऽध्यवसायकर इति न्यायेन ब्राह्मणपदे अजहत्स्वार्थवृत्तिकल्पने लाघवस्यैव विनिगमकत्वात् । गौण्यां हि सर्वथा स्वार्थपरित्यागः अजहत्स्वार्थायां तु न लेशतोऽपि स्वार्थत्यागः किं त्वधिकपरिग्रहमात्रमिति विशेषस्य सुव्यक्तत्वात् । न हि लक्षणेत्येव साम्यं तथा सति तत्पुरुषलक्षणापेक्षया बहुव्रीहिलक्षणाया अप्यविशेषप्रसङ्गात् । तस्माच्छागपशुन्यायेनात्र ब्राह्मणपदं द्विजमात्रपरमिति साधु समर्थितं भवति । तस्मात्प्राचामभिमतो ब्राह्मणपदस्योपलक्षणतापक्षो मुख्य इत्यध्यवस्यामः ।

उपलक्षणतापक्षमूलक एव च ब्राह्मणेतरयोः क्षत्रियवैश्ययोस्त्रिदण्डनिषेधविधिरन्यथा ब्राह्मणस्यैव न्यासाधिकारित्वेन इतरयोस्तत्प्रापकप्रमाणविरहादेव संन्यासानधिकारित्वसिद्धौ त्रिदण्डनिषेधविधिरपार्थक एव स्यान्न ह्यत्यन्ताप्राप्तो निषेधः । इतरथा तु शूद्रस्यापि त्रिदण्डो निषिध्येत । उपलक्षणत्वे तु अधिकारिस्वरूपनिर्दिदिक्षया ब्राह्मणपदप्रयोगे कृते क्षत्रियवैश्ययोरपि द्विजातितया कामं त्रिदण्डैकदण्डलक्षणसंन्यासप्राप्तौ गौण एकदण्डसंन्यासो विधीयते मुख्यस्तु त्रिदण्डसंन्यासोऽनधिकारान्निषिध्यते । साक्षात्कृतानेकशतशाखा मन्वादयो हि शाखान्तरे स्फुटं पठ्यमानं क्षत्रियादेस्त्रिदण्डनिषेधमुपलभ्य ब्राह्मणाः प्रव्रजन्तीति श्रुतेः क्षत्रियादेरेकदण्डलक्षणप्राव्राज्यविधायकतामवधृत्य त्रिदण्डनिषेधं संस्मरन्तीति स्वास्थ्यं सर्वविधिनिषेधशास्त्राणां, परत्रापि च मैत्रायण्यादिश्रुतिषु पठ्यमाना एकदण्डविधयः क्षत्रियादीनेवावलम्बन्ते त्रिदण्डग्रहणासमर्थान् वृद्धानातुरान् काणान् कुणान् समुपस्थितसंक*टानपरांश्च

* बहूदकानां न्यासनिषेधपरवाक्यानि उत्कटवैराग्यविरहे योज्यानि ।

तयाविधान् । त्रिदण्डपरित्यागपूर्वकैकदण्डग्रहणपराः श्रुतिस्मृतयो-ऽप्येतद्विषया एव, अथवा पूर्वस्मिन् वयसि गृहीतत्रिदण्डोऽपि जरया जीर्णच्छरीरस्त्रिदण्डनियतधारणाशक्तौ वृद्धादिस्त्रिदण्डमपहाय एकद-ण्डपरिग्रहायानुमन्यते तादृशवाक्यैः । प्राधान्यं चैकदण्डे चतुर्थाश्र-मसंबन्धबलवत्त्वमेव त्रिदण्डैकदण्डधारणकल्पयोः संपदापत्कालिक-तायाः स्मृतिषु स्पष्टमुद्घुष्यमाणत्वात् । क्वचिन्त्वेकदण्डपदेन ज्ञानात्मकैकदण्ड इत्यादिकं बहुतरमिहास्माभिस्तत्रतत्रोपपादितम-नुसंधेयमिति किमिहास्थाने मतिकर्दमेन ।

एवं च प्रथमप्रतीतजातिब्राह्मणोद्देशेन प्रव्रज्याविधेश्चारिता-र्थ्ये ब्राह्मणपदस्य चरमप्रतीतयौगिकार्थाख्यानं रूढिर्योगमपहरतीव पराह-तमित्याद्युपालम्भदानं ब्राह्मणपदस्योपलक्षणतापत्ते ब्राह्मणाः प्रव्र-जन्तीति जाबालश्रुतिस्थब्राह्मणपदस्योपरोधाभिधानम् औदुम्बरीस्प-र्शनसर्ववेष्टनश्रुतिस्मृत्योः साजात्यं पुरस्कृत्याथ क्षत्रियादेर्न्यासबोध-कसूत्रपुराणेतिहासानां सर्वेषामप्रामाण्यसमर्थनमित्यादिप्रयत्नजातं मदनपारिजातकृतां न केवलं मीमांसानध्ययनमेवावेदयति किन्तु स्वरूपतः श्रुतिस्मृत्याद्यनभिज्ञतामपीति सुधियो विभावयन्तु । यत्तु त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति छन्दोगसूत्रस्याय-मर्थः त्रयाणां वर्णानां यथोचितं चत्वार आश्रमा इति औचित्यं च श्रुतिविरोधाद् ब्राह्मणस्यैव तुर्याश्रमाधिकारविधेः ।

त्रैवर्णिकानां संन्यासोऽविद्यते नात्र संशयः ।
शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डयुक् ॥

इति ब्रह्माण्डपुराणमपि छन्दोगसूत्रसमानार्थकमिति मदन-पारिजातकारास्तदिदमपि तेषां मर्कटस्य मुकुरे मुखावलोकनकल्पं

भ्रान्तिवर्द्धनमेव श्रुतिविरोधस्यासत्वे यथोचितमित्याद्यध्याहारस्य सूत्रस्य वेदमधीत्येत्येतस्याधिकारिनिर्देशपरस्यासङ्गत्यापत्तेश्च, वेदाध्ययनं हि चातुराश्रम्याधिकारिताचच्छेदकतया निर्दिष्टं तच्च न त्वत्पक्षे समञ्जसम्, अध्ययनवतोरपि क्षत्रियवैश्ययोस्तुरीयेऽनधिकारात् । वैवर्णिकानां सन्यास इति ब्रह्माण्डवचनस्य तु यथोचितमित्यध्याहारेऽपि न सङ्गतिस्तस्य 'विद्यते नात्र संशय'—इत्यसंशयाख्यानमुखेन क्षत्रियवैश्ययोरेव विशिष्य सन्यासस्य धर्म्यत्वाभिधानपरत्वात् । अन्यथा ब्राह्मणस्य सन्यासः सुप्रसिद्ध इत्यसंशयोक्तिरपार्थिकेति सुव्यक्तमेव । यदपि ।

वैराग्योत्पत्तिमानेव संन्यासे परियुज्यते ।
रागवान्न तु विप्रोऽपि वेदवेदाङ्गवित्तमः ॥

इति ब्रह्मवैवर्तवचनस्य वेदवेदाङ्गवित्तमोऽपि विप्रो रागवांश्चेत्संन्यासे न परियुज्यते इत्यन्वयमाख्याय एव च विप्रस्य विरक्तस्यैवाधिकारोऽभिहितो भवेन्न क्षत्रियादेरित्युपसजहार पारिजातस्तदपि निरुक्तरीत्या क्षत्रियादेः सन्यासस्य धर्म्यत्वसिद्धौ वचनस्य वैयर्थ्येन क्लेशमात्रावहं न त्वर्थसाधकमिति किं तत्र निराकरणसनाहेनेत्युपरम्यते ।

यत्तु ।

ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ॥

इति स्मृतौ प्रव्रज्याशब्दस्य सन्यासे रूढस्यापि वानप्रस्थाश्रमावलम्बनार्थकत्वं तस्यापि वैराग्यहेतुकत्वादिति पारिजातस्तदपि प्रलापान्नातिरिच्यते । रूढ्यनादरकारणविरहात् । ऋणत्रयापाकरणा

धिकारिणां ब्राह्मणक्षत्रियाणां स्वधर्माभिहिते प्रव्रजने मुख्यानुगृहीते प्रव्रज्यादिलक्षणावलम्बनस्य महाभ्रान्तिहेतुकत्वात् ।

*यत्तु यद्वा ब्राह्मणः स्ववृत्तावजीवन् क्षत्रियवृत्तिमाश्रितः ।* तयाऽप्यजीवन् वैश्यवृत्तिं ततश्च तामापद निस्तीर्यापि न यथान्तरवृत्तिं परित्यजति किंतु तत्रैव वृत्ताववस्थितस्तदा तत्तत्क्षत्रियादिवृत्तिः क्षत्रिय इति वैश्य इति च व्यपदिश्यते शास्त्रानभ्यनुज्ञानकालेऽपि क्षत्रियादिवृत्तिनिरतत्वात्ततः सोऽपि प्रव्रजेद् गृहादिति प्रव्रज्याधिकारं दर्शयति अत एव ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा इति वचने अथ—शब्द उपात्तः, ब्राह्मण एवानन्तरं क्षत्रवृत्त्याश्रयणात् क्षत्रियः अथ स एव वैश्यवृत्त्या वैश्य इत्यानन्तर्यप्रतिपादनादयमर्थो लभ्यते । एतेन ।

ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती ।

इत्येतदपि व्याख्यातम् । एवं च मनुदत्तात्रेयादिवचनान्यप्यानुकूल्यं नेयानि इति बभाम पारिजातस्तदयुक्तं ब्राह्मणः क्षत्रिय इति स्मृतिस्थ ब्राह्मणपदं क्षत्रियाचारब्राह्मणपरं वैश्यपदं च वैश्याचारब्राह्मणपरमित्यर्थनिह्नवणे मुख्यब्राह्मणालाभेन न्यूनताप्रसङ्गः । एकस्य ब्राह्मणपदस्य तूभयार्थकत्वे युगपद्वृत्तिद्वयप्रसङ्गः । किंच सन्यासविधौ वैराग्यवत्तामेव वैराग्योत्पत्तिमात्रेव सन्यासे परियुज्यते इत्यादिस्मृत्याऽधिकारबोधनेन तेषां च सतां विप्राणां क्षत्रिय*वैश्यवृत्तिताया अवश्यत्वेन कथमिदं सङ्गच्छतामभिधानमिति विवेकिन एव विवेचयन्तु । किंचानापद्यपि ये न त्यजन्ति क्षत्रियादिवृत्तिं तेऽप्य भवता ब्राह्मणा दुर्वृत्ता क्षत्रियादिपदेन बोधनीया न च तेषामष्ट

* न हि संन्यासैकपदोपस्थितेरापद्भागेऽपि विप्राः क्षात्रवैश्यवृत्तय इति सम्भवति ।

ङ्कारममकाररहित्यसम्भवः स्मृतौ च निर्ममो निरहङ्कृतिरित्युच्यते न चैव स्वधर्मच्युतोऽपि निर्ममो निरहङ्कृतिरपीति च युज्यते, द्वितीयस्मृतावपि ततो गच्छेद्ध्रुवं कृतीति कृतित्वोपादानान्न चत्रादिवृत्तिर्ब्राह्मण एव चत्रादिरिति वक्तुं शक्यम् । तस्मादुक्तावेषदुर्बोधःश्वेतकेतुप्रभृतिभिः श्रुतिषु सहपठितानां जडभरतनिदाघरैवतकप्रभृतीनां राजर्षीणां पारमहंस्ये साधारण्येन सलिङ्गेऽधिकारसिद्धौ कैमुतिकसिद्धोऽपरचोपि संन्यासेऽधिकार इति तदुपरोधः सुरगुरोरप्यशक्य इति मदनपारिजातकृतां सर्वोऽप्येष पूतिकूष्माण्डायितो ग्रन्थः । किंच विष्णुपुराणे मन्वादिवचनेषु च ब्राह्मणपदेनोपक्रम्य द्विजपदेनोपसंहारो ब्राह्मणपदस्य द्विजात्युपलक्षकताबोधक इति द्विजातिमात्रस्याधिकारो न्यासे सिध्यति । उपसंहारबलेनोपक्रमस्य नेतव्यतया द्विजातिमात्राधिकारबोधकमनूपसंहारेण उपक्रमस्थब्राह्मणपदस्य नेतव्यत्वात् ।

यद्यप्यसञ्जातविरोधितयोपक्रमस्यैव प्राबल्येन सिद्धान्ते उपक्रमानुरोधेनोपसंहारो नेतव्य इति प्राप्नोति तथाऽपि ।

एतद् द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः ।<br>
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा ॥<br>
अनेन क्रमयोगेन परिव्रजति यो द्विजः ।<br>
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥

इति मनुवचनयोर्द्विजन्मसाफल्यं न्यासेनाभिधाय ब्राह्मणस्य विशेषत इत्युक्त्या द्विजातिमात्रस्य स्पष्टमधिकारसिद्ध्या तद्बलोपेतस्योपसंहारस्य हीनबलस्याप्युपक्रमबाधकत्वं, हीनबलस्यापि बलवत्प्रमाणोपेतस्य बलवत्तमतया: *प्रबला अपि बाध्यन्ते निर्बलैः* पार्थिवाश्रितैः । इति मीमांसकैरप्यभ्युपेतत्वात् ।

एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । इति वाजसनेयकब्राह्मणस्थब्राह्मणपदं तु वाजसनेयकब्राह्मणो*क्तरीत्यैव ब्राह्मणक्षत्रियवैश्यपरम् । तद्यथा, यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते इति, इयमेव च व्यवस्था—

*आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।* इति,

एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ॥

इति चोपक्रमोपसंहारयोर्मनूक्तब्राह्मणपदस्येति सर्वमनुकूलमनाकुलं च ।

दत्तात्रेयादिवाक्यानि तु त्रिदण्डनिषेधपराणि न चाच क्ष्महे क्षत्रियविशोस्त्रिदण्डाधिकारितां किन्त्वेकदण्डाधिकारिताम् । पारिजातस्य शेषः क्षत्रियादेस्तुरीयानधिकारपरो ग्रन्थस्तु पूर्वमेवास्माभिर्बहुधा विहतिं नीत इति न किञ्चिदवशिष्यते । तस्मात्पारिजातकृता कीदृशोऽनर्थ्यग्रन्थ इति विवेचनीयं विद्वद्भिरेवानाकुलमतिभिरिति विरमामो विस्तरात् ॥

यदपि केश्चिन्मानवधर्मशास्त्रं व्याचक्षाणैः । षष्ठाध्याये ।

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ॥ ३८ ॥

इति । तत्रैव षष्ठाध्याये ।

एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ।

पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत ॥ ९७ ॥

---

* उपक्रमोपसंहारयोरुपक्रमानुरोधेनोपसंहारो नेतव्य इति मीमांसकाः । उपसंहारानुरोधेनोपक्रमो नेतव्य इति शाङ्कराः ।

इति च श्लोके उपक्रमोपसंहारयोर्ब्राह्मणपदोपादानान्नाधिकारः क्षत्रियादेर्न्यासे इत्युक्तं, तथाऽपि न ते मनुमर्मार्थविदः प्रकरणानुपद्दश्यानविरहात्तथा हि अस्मिन् प्रकरणे ब्राह्मणपदं द्विजमात्रतात्पर्यकमन्यथा ।

प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥ ७० ॥

इति षष्ठेऽध्याये प्राणायामत्रयमभिहितं ब्राह्मणजातेरेव परमतपस्त्वेनोक्तं स्यादिति द्विजमात्रस्य सर्वबाह्याभ्यन्तरमलक्षालनहेतुत्वेन तस्य शास्त्रान्तरेषु सर्वत्राभिधानं विरुध्येत । अत एव त्विह प्रकरणे ।

यस्मादण्वपि भूतानां द्विजान्नोत्पद्यते भयम् ॥ ४० ॥
आगारादभिनिष्क्रान्तः पवित्रोपचितोमुनिः ॥ ४१ ॥
उपेक्षकोऽसङ्कुसुमो मुनिर्भावसमाहितः ॥ ४३ ॥
अनेन क्रमयोगेन परिव्रजति यो द्विजः ॥ ८५ ॥
चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ॥ ९१ ॥
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥ ९४ ॥

इति च क्षत्रियादिसाधारणद्विजसंग्रहाय मुनिद्विजादिपदमभ्यास्यन्मध्ये मनुः । ततश्च तात्पर्यग्राहकलिङ्गषट्के उपक्रमोपसंहारयोः संभूयैकलिङ्गरूपतया क्षत्रियादेर्न्यासबोधकप्रमाणान्तरोपष्टब्धस्यास्य मानवाभ्यासस्योपक्रमाद्यपेक्षया बलवत्त्वेन क्षत्रियादेर्न्यासोऽभ्जसैव मनुवाक्यात् सिध्यति ।

अत एव तु जाबालादिश्रुतिस्थब्राह्मणपदार्थस्फुटीकरणाय ।
दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ।
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥ ९४ ॥

इति द्विजपदघटितं विधिवाक्यान्तरं मनुः पपाठ । अन्यथा ब्राह्मणस्य संन्यासः पूर्वमेवावेदित इति किं पौनःपुन्याभिधानम् । एतावानेव परं विशेषो यत्क्षत्रियस्त्रिदण्डं नार्हति किं त्वेकदण्डमिति किमाम्रेडनेन । जाबालादिश्रुत्यभिहितसंन्यासस्य क्षत्रियादिसाधारण्येऽपि त्रिदण्डैकदण्डलक्षणपेलक्षण्यस्य स्फोरणार्थमेव मनोर्वाक्यद्वयेन संन्यासाभिधानमित्यपि मनुमर्मविदां सुधानम् ।

अथ केचन परेऽपि ब्राह्मणस्यैवाश्रमचतुष्टयाधिकारमुपवर्णयन्ति तदुपष्टम्भकतयोदाहरन्ति च श्रुतिस्मृतीतिहासपुराणवाक्यानि, तथा हि वाजसनेयकब्राह्मणम् । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति इति, मनुरपि ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।
इत्युपक्रम्य एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ।

इत्युपसंजहार । तदिहोपक्रमोपसंहाराभ्यां ब्राह्मणस्यैवाश्रमचतुष्टयाधिकारः सिध्यति अत एवापरत्रापि मनुः ।

मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः ॥

इति क्षत्रियादिवारणाय द्विजोत्तमपदमुपात्तवान्, नारदोऽपि–

प्रथमादाश्रमाद्वापि विरक्तो भवसागरात् ।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत् ॥ इति

योगियाज्ञवल्क्योऽपि ।

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥ इति,

धामनपुराणमपि ।

चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्त्तिताः ।
गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थं त्रयो*ऽऽश्रमाः ॥
क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि ।
ब्रह्मचर्यं च गार्हस्थ्यमाश्रमद्वितयं विशः ॥
गार्हस्थ्यमुचितं चैकं शूद्रस्य क्षणदाचर ! ॥ इति,

अत्र चोचित्याभिधानेन ज्येष्ठाश्रमत्रयस्य समन्त्रकतया तदनधिकारिणः शूद्रस्यैकाश्रम्यं न्यायसिद्धमित्युच्यते । यद्यपि विवाहोऽपि समन्त्रकस्तथापि विशिष्य शूद्रस्यामन्त्रकविवाहाभिधानमिति तत्यामन्त्रकः स सिध्यतीति तात्पर्यम् । एवमेव तु काषायदण्डादिलिङ्गधारणं क्षत्रिय-वैश्ययोर्निषिद्धमित्यामनन्ति स्मृतिकाराः ।

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥ इति,

बौधायनोऽपि ।

ब्राह्मणानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः ॥ इति,

तस्माद् ब्राह्मणस्यैव ब्रह्माश्रमाधिकार' सिध्यतीति, तदिदं श्रुतिस्मृतीतिहासपुराणवचनानां पाठतोऽर्थतश्चानाकलननिबन्धनम् । तथा हि पैङ्गिरहस्यब्राह्मणे जडभरतः क्षत्रियमुद्दिश्य । यदि मृत्योः परं शान्तमनामयं शाश्वतं पदमिच्छुरसि तत्परमहंसो भव । अत्र भवेति विधिप्रत्ययघटितबलवद्वैदिकलिङ्गोपेतैर्वक्ष्यमाणैरुक्तैश्च प्रमाणैः स्फुटं तुरीयाश्रमस्य वैश्यक्षत्रियाधिकारिकत्वसिद्धिः ।

---

* आर्ष. पाठ ।

यथाऽऽह ।

ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।

ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ॥

इति स्मृतिः ।

चयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति सूत्रम् ।

वैवर्णिकानां सन्यासो विद्यते नाव सन्यासः ।

शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डभाक् ॥

इति ब्रह्माण्डपुराणम् ।

ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वन कृती ।

सन्न्यसेद्बन्धनाशाय सर्वभूतदयापरः ॥ इति च स्मृतिः

यथानुकीर्तनप्रस्तावे द्वादशाध्याये कौर्मे च ।

अथास्मिन्नन्तरेऽपश्यत्समायान्तं महामुनिम् ।

श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥

भस्मसन्दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम् ।

तपसा दर्शितात्मानं शुक्लयज्ञोपवीतिनम् ॥

समाप्य संस्तवं शम्भोरानन्दाश्रुविलोचनः ।

ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत् ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे साक्षान्मुनीश्वरः ।

योगीश्वरोऽद्य भगवान् दृष्टो योगविदांवरः ॥

अहो मे सुमहद् भाग्यं तपांसि सफलानि मे ।

किं करिष्यामि शिष्योऽहं तव मां पालयानघ ! ॥

सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम् ।

शिष्यत्वे परिजग्राह तपसा क्षीणकल्मषम् ॥

सांन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः ।
ददौ तदैश्वरं स्थानं स्वशाखाविहितं व्रतम् ॥
ऋषेयवेदसारं तत्पशुपाशविमोचनम् ।
अत्याश्रम इति ख्यातं ब्रह्मादिभिरनुष्ठितम् ॥ इति,

एवं पृथुपौत्रस्य सुशीलस्य क्षत्रियस्य श्वेताश्वतरमुनिना कृत्स्नसांन्यासिकविध्यनुष्ठापनपरम् । कात्स्न्र्ये चात्र बाह्याभ्यन्तरभेदभिन्नं दण्डकमण्डलुशमदमादिस्वरूपम् ।

ब्रह्मवैवर्तपुराणे च ।

वैराग्योत्पत्तिमात्रेण संन्यासे परियुज्यते ।
रागवान्न तु विप्रोऽपि वेदवेदाङ्गवित्तमः ॥ इति,

अत्र रागवतोविप्रस्यानधिकारख्यापनमुखेन विप्रोऽपीत्यपिना क्षत्रियादेरधिकारोन्यासे आञ्जस्येन सिध्यति । एवम् ।

एतद् द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजोभवति नान्यथा ॥

इति सांन्यासिकप्रकरणस्था स्मृतिर्दण्डग्रहणेन द्विजन्मसाफल्यं प्रमापयन्ती ब्राह्मणस्य विशेषतोऽधिकारं कथयन्ती च क्षत्रियादेश्चतुर्थाश्रमाधिकारं स्फुटमेव साधयति । एवमेव तु ।

प्रव्रज्याऽवसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दास्यं क्षत्रियवैश्ययोः ॥ इति

प्रव्रज्याभ्रष्टानां ब्राह्मणक्षत्रियविशां मध्ये ब्राह्मणस्य निर्वासनं क्षत्रविशोश्च दास्यं ब्रुवती कात्यायनस्मृतिस्त्रयाणामप्यविशेषेण तुरीयाश्रमग्रहणे प्रमाणम् ।

यथाऽऽह।

अनाश्रममनाकृत्य निर्ममो निरहङ्कृतिः।
ब्राह्मणः क्षत्रियोवाऽथ वैश्यो वा प्रव्रजेद् गृहात्॥

इति स्मृतिः।

त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति सूत्रम्।

त्रैवर्णिकानां संन्यासो विद्यते नात्र संशयः।
शिखायज्ञोपवीतानां त्यागपूर्वैकदण्डभाक्॥

इति ब्रह्माण्डपुराणम्।

ब्राह्मणः क्षत्रियो वैश्यस्ततो गच्छेद्वनं कृती।
संन्यसेद्बन्धनाशाय सर्वभूतदयापरः॥ इति च स्मृतिः

वंशानुकीर्तनप्रस्तावे द्वादशाध्याये कौर्मं च।

अथास्मिन्नन्तरेऽपश्यत्समायान्तं महामुनिम्।
श्वेताश्वतरनामानं महापाशुपतोत्तमम्॥
भस्मसन्दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम्।
तपसा कर्षितात्मानं शुक्लयज्ञोपवीतिनम्॥
समाप्य संस्तवं शम्भोरानन्दाश्रुविलोचनः।
ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत्॥
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे साक्षान्मुनीश्वराः।
योगीश्वरोऽद्य भगवान् दृष्टो योगविदांवरः॥
अहो मे सुमहद् भाग्यं तपांसि सफलानि मे।
किं करिष्यामि शिष्योऽहं तव मां पालयानघ!॥
सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम्।
शिष्यत्वे परिजग्राह तपसा क्षीणकल्मषम्॥

सांन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः ।
ददौ तदैश्वरं ज्ञानं स्वशाखाविहितं व्रतम् ॥
अशेषवेदसारं तत्पशुपाशविमोचनम् ।
अत्याश्रम इति ख्यातं ब्रह्मादिभिरनुष्ठितम् ॥ इति,

एवं पृथुपौत्रस्य सुशीलस्य क्षत्रियस्य श्वेताश्वतरमुनिना कृत्स्नसांन्यासिकविध्यनुष्ठापनपरम् । कार्त्स्न्यं चात्र बाह्याभ्यन्तरभेदभिन्नं दण्डकमण्डलुशमदमादिस्वरूपम् ।

ब्रह्मवैवर्तपुराणं च ।

वैराग्योत्पत्तिमात्रेण संन्यासे परियुज्यते ।
रागवान् तु विप्रोऽपि वेदवेदाङ्गवित्तमः ॥ इति,

अत्र रागवतोविप्रस्यानधिकारख्यापनमुखेन विप्रोऽपीत्यपिना क्षत्रियादेरधिकारोन्यासे आञ्जस्येन सिध्यति । एवम् ।

एतद् द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजोभवति नान्यथा ॥

इति सांन्यासिकप्रकरणस्था स्मृतिर्दण्डग्रहणेन द्विजन्मसाफल्यं प्रमापयन्ती ब्राह्मणस्य विशेषतोऽधिकारं कथयन्ती च क्षत्रियादेश्चतुर्थाश्रमाधिकारं स्फुटमेव साधयति । एवमेव तु ।

प्रव्रज्याऽवसिता यच्च यो यौ द्विजातयः ।
निर्वासं कारयेद्विप्रं दास्यं क्षत्रियवैश्ययोः ॥ इति

प्रव्रज्याभ्रष्टानां ब्राह्मणक्षत्रियविशां मध्ये ब्राह्मणस्य निर्वासनं क्षत्रियविशोश्च दास्यं ब्रुवती कात्यायनस्मृतिर्भवति क्षत्रायामप्यविशेषेण तुरीयाश्रमपदवौ प्रमाणम् ।

अत एव तु त्रयाणामविशेषेणाधिकारबुबोधयिषया ।

अनिरुध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं कृत्वा च भूतानाममृतीभवति द्विजः ॥

इति याज्ञवल्क्यो द्विजपदं प्रायुङ्क्त ।

धर्मविवृतौ ।

ब्राह्मणः क्षत्रियो वैश्यस्त्रातो गच्छेद्वनं कृती ।
सन्यसेद्वासनाशान्तः सर्वभूतदयापरः ॥

इति स्मृतिः ।

ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात् ॥
आत्मीनात्मनि संस्थाप्य द्विज प्रव्रजितो भवेत् ।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥
एव वनाश्रमे तिष्ठंस्तपसा दग्धकिल्बिषः ।
चतुर्थमाश्रमं गच्छेत्सन्यस्य विधिना द्विजः ॥

इति कौर्मनारसिंहे अपि पुराणे भवतः प्रमाणम् । यत्तु तत्तु संन्यासप्रकरणे ब्राह्मणपदघटितासु सर्वास्वपि श्रुतिस्मृतिषु यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते । इति शतपथब्राह्मणोदितं कर्मब्राह्मण्यमेव विवक्षितं, न च तच्छूद्रादावतिप्रसक्तं तेषां वैदिके कर्मण्यध्ययनविधिविद्धवेदवैधुर्येणानधिकारात् । युक्तं चैतत्स्वाश्रमविहितकर्मानुष्ठानेनान्तःकरणकषायपरिपाके संन्यासौपयिकब्राह्मण्यस्य क्षत्रियविट्सु सर्वद्विजेषूत्पादसम्भवात् । तस्माद्विज्ञान्यथैव ब्राह्मणाद् ब्राह्मण्यां विधिपरिणीतायामुत्पाद्यमानत्वलक्षण

ब्राह्मण्यं न विवेचितुं शक्यम्। एवमेव तु गुणनिबन्धनब्राह्मण्यम-भ्रवन् नहुषं प्रति युधिष्ठिरः।

सत्यं ज्ञानं क्षमाशीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र राजेन्द्र! स ब्राह्मण इति स्मृतः॥
यत्रैतन्न भवेन्नूनं तं शूद्रमिति निर्दिशेत्। इति।

वह्निपुराणेऽपि।

न जातिर्न कुलं राजन्! न स्वाध्यायः श्रुतं न च।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम्॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु॥
नैकमेकान्ततो ग्राह्यं पठनं हि विशांपते!।
वृत्तमन्विष्यतां तात! रक्षोभिः किं न पठ्यते॥
बहुना किमधीतेन नटस्येव दुरात्मनः।
तेनाधीतं श्रुतं चापि यः क्रियामनुतिष्ठति॥
कपालस्थं यथा तोयं श्वदृतौ च यथा पयः।
दूष्यं स्यात्स्थानदोषेण वृत्तहीनं तथा श्रुतम्॥
चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः।
तस्माद्विद्धि महाराज! वृत्तं ब्राह्मणलक्षणम्॥

इत्येवमादि तत्रतत्र श्रुतिस्मृतिपुराणादिषु विविधमेव प्रयोजनभेदेन ब्राह्मण्यमाम्नायते।

केचित्तु संन्यासाधिकारबोधकश्रुतिस्मृत्यादिवाक्यस्थं ब्राह्मणपदं द्विजातिमात्रोपलक्षणमत एव तु बहुले तेषुतेषु वचनेषु वर्णत्रयसाधारण्यसंपादनाय द्विजपदप्रयोगः। अत एव तु।

द्वितीयमायुषो भागमुषित्वा तु गृहे द्विजः ।
तृतीयमायुषो भागं गृहमेधी वने वसेत् ॥
उत्पाद्य धर्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः ।
दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोऽरण्यमाविशेत् ॥

इति यमस्मृतौ ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणार्थम् उषित्वा तु गृहे द्विज इत्युपक्रमानुसारादिति पाराशर्यौ माधवाचार्यो ऽपि । एवमेव तु ।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥

इति स्मृतिस्थं विप्रपदमपि त्रैवर्णिकोपलक्षकमित्यप्यविप्रतिपन्नं, तथा च यथा जायमानो हि ब्राह्मणस्त्रिभिः ऋणवाँजायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी । इति श्रुतिस्थं ब्राह्मणपदं त्रैवर्णिकोपलक्षकम् ऋणत्रयस्य त्रैवर्णिकसाधारण्यादेव ब्राह्मणाः प्रव्रजन्तीत्यादिषान्यासिकविधिष्वपि ।

समतश्चायमर्थः सुरेश्वराचार्याणामेकदण्डिनामपि यथोक्तं तैर्बृहदारण्यकवार्त्तिके ।

ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् ।
अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने ॥
त्रयाणामविशेषेण सन्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्याद् ब्राह्मणग्रहणं तदा ॥ इति,

मिताक्षराकारोऽपि ब्राह्मणपदस्योपलक्षणतापक्षमास्थे । अन्ये तु त्रैवर्णिकानां प्रकृतत्वात् त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमा इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकार माहुः । इति ब्रुवन् ।

तदेवं त्रैवर्णिकानां ब्रह्मक्षत्रविशामपि धर्मः सन्यासः । न चैवं सति क्षत्रविशोः सन्यासनिषेधपराणां पूर्वोक्तस्मृतीनां का गतिरिति शङ्क्यम् ।

मुखजानानामयं धर्मो वैष्णवं लिङ्गधारणम् ।
बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥

इति विशेषवचनेन क्षत्रविशोः सन्यासविधायकस्मृतिसूत्र पुराणानुरोधेन त्रिदण्डधारणस्यैव प्रतिषिद्धत्वात् ।

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नायं धर्मो विधीयते ॥

इति स्मृत्यन्तरेऽपि नायं धर्मो विधीयते इत्यनेन त्रिदण्ड धारणलक्षण एव धर्मो निषिध्यते । न तु सामान्यतोदण्डमात्रमेकदण्डधारणस्य क्षत्रविशो पूर्वोक्तब्रह्माण्डपुराणादिवचनेन स्पष्टमवगतेः । एतेन क्षत्रविशोः सन्यासनिषेधकव्याख्यानां काषायदण्डधारणलक्षणलिङ्गनिषेधपरत्वाख्यानेन व्याख्यानं पाराशरीये माधवाचार्याणामपि सर्वथा हेयमेव । अथवा परमतोपन्यासमात्रं तत्र तु स्वाभिमतमिति ज्ञेयम् ।

सान्यासिकं विधिं कृत्स्नं कारयित्वा त्रिविक्रमः ।
ददौ तदेश्वरं ज्ञानं स्वशाखाविहितं व्रतम् ॥

इत्यादिपूर्वोक्तकौर्मवचने कार्त्स्न्येन पृथुपौत्रे सुशीले श्वेता

स्वतरमुनिना सांन्यासिकविध्यनुष्ठापनाभिधानेन निषेधशाङ्क्यानां विशिष्य निषिद्धचिदण्डपरताया एव न्याय्यत्वात् । अलिङ्गसंन्यासस्य शूद्रमात्राधिकारिकत्वेन सर्वविशेषशास्त्रीयत्वाच्च ।

यच्च स्मृतिकाराणां पुराणाचार्याणां च ।

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेकी वैश्यशूद्रयोः ॥

इत्यादि विशिष्य वर्णभेदेनाश्रमविशेषानुष्ठानस्य धर्म्यत्वपरिगणनं तदपि तेषुतेषु वर्णेषु नाश्रमान्तरस्याधर्म्मत्वाभिधानाय किन्तु वर्णभेदेन सत्त्वरजस्तमःप्रकृतिकतायाः प्रायो बहुवैचित्र्येण स्वस्वप्रकृत्यनुसारेण तत्तदाश्रमाणां तत्तद्वर्णेषु स्वनुष्ठानत्वमात्रतात्पर्येणैव । अत एव शान्तिपर्वणि राजधर्मप्रस्तावे वर्णाश्रमधर्मकथनावसरे षिपष्टितमाध्याये ब्राह्मणस्य विशेषतो धर्म्मान्यभिधाय

तस्माद्धर्मो विहितो ब्राह्मणस्य दमः शौचमार्जवं चापि राजन्!
तथा विप्रस्याश्रमाः सर्व एव पुरा राजन् ब्रह्मणा वै निसृष्टाः ॥
यः स्याद्दान्तः सोमपश्चार्यशीलः सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान् स वै विप्रो नेतरः पापकर्मा ॥

इति चाभिधाय ।

शूद्रं वैश्यं राजपुत्रं च राजन्! लोकाः सर्वे संश्रिता धर्मकामाः
तस्माद्वर्णान् शान्तिधर्मेष्वसक्तान् मत्वा विष्णुर्नेच्छति पाण्डुपुत्र! ॥

इति युधिष्ठिरं प्रति भीष्म आह । अयमिहार्थः तत्तदाश्रमधर्मानुष्ठानकामा ब्राह्मणाः स्थानपदेन स्थानिनिर्देशाल्लोकपद लोकस्थपरमिति देवा विवक्ष्यन्ते ततश्च सर्वाश्रमनिष्ठा ब्राह्मणास्तत्लोकस्थदेवाश्च शूद्रं [illegible] न । [illegible] अथाः

देवाश्च एतान् विना क्षिमपि कर्तुं पारयन्ते ब्येष्ठाश्रमिभिरेतैरेव तेषां निर्वाहसम्भवात् ।

अत एव तु दण्डग्रहणनियते पारमहंस्ये धर्मावतारस्य युधिष्ठिरस्यासीत्सुदृढः संकल्पस्तथाऽपि चातधर्ममेवासेविष्ट स न । तु संन्यास्यदिति महाभारते स्मर्यते यथा ।

अथवैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन् भैक्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥ १ ॥
पांसुभिः समभिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ २ ॥
न शोचं न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः ॥ ३ ॥
आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः काञ्चित्संविदं जातु केनचित् ॥ ४ ॥
जङ्गमाजङ्गमान्सर्वानविहिंसंश्चतुर्विधान् ।
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति ॥ ५ ॥
न चाप्यवहसन्कांचिन्न कुर्वन् भ्रुकुटीः क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ ६ ॥
अपृच्छन् कस्य चिन्मार्गं प्रव्रजन्नेव केनचित् ।
न देशं न दिशं काञ्चिद्गन्तुमिच्छन् विशेषतः ॥ ७ ॥
गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुप्रणिहितो गच्छंस्त्रसस्थावरवर्जकः ॥ ८ ॥
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि ।
द्वन्द्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् ॥ ९ ॥

व्यासमुनिना सांन्यासिकविध्यनुष्ठापनाभिधानेन निषेधवाक्यानां विशिष्य निविष्टविषयतापरतया एव न्याय्यत्वात् । अग्निहोत्रसंन्यासस्य शूद्रमात्राधिकारिकत्वेन च विशेषशास्त्रीयत्वाच्च ।

यच्च स्मृतिकाराणां पुराणाचार्याणां च ।

चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः ॥

इत्यादि विशिष्य वर्णभेदेनाश्रमविशेषानुष्ठानस्य धर्मत्वपरिगणनं तदपि तेषुतेषु वर्णेषु नाश्रमान्तरस्याधर्मत्वाभिधानाय किन्तु वर्णभेदेन सत्त्वरजस्तमःप्रकृतिकतायाः प्रायो बहुशो विषयेण स्वस्वप्रकृत्यनुसारेण तत्तदाश्रमाणां तत्तद्वर्णेषु स्वनुष्ठानत्वमात्रतात्पर्येणैव । अत एव शान्तिपर्वणि राजधर्मप्रस्तावे वर्णाश्रमधर्मकथनावसरे षष्टितमाध्याये ब्राह्मणस्य विशेषतो धर्मान्यभिधाय

तस्माद्धर्मो विहितो ब्राह्मणस्य दमः शौचमार्जवं चापि राजन् !
तथा विप्रस्याश्रमाः सर्व एव पुरा राजन् ब्रह्मणा वै निसृष्टाः ॥
यः स्याद्दान्तः सोमपश्चार्यशीलः सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान् स वै विप्रो नेतरः पापकर्मा ॥

इति चाभिधाय ।

शूद्रं वैश्यं राजपुत्रं च राजन् ! लोकाः सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णान् शान्तिधर्मेष्वसक्तान् मत्वा विष्णुर्नेच्छति पाण्डुपुत्र ! ॥

इति युधिष्ठिरं प्रति भीष्म आह । अयमिहार्थः तत्तदाश्रमधर्मानुष्ठानकामा ब्राह्मणाः स्थानपदेन स्थाननिर्देशाल्लोकपद लोकस्थपरमिति देवा विवक्ष्यन्ते, ततश्च सर्वाश्रमनिष्ठा ब्राह्मणास्तल्लोकस्थदेवाश्च शूद्रं वैश्यं क्षत्रियं चापेक्षन्ते न हि ब्राह्मणाः

देवाश्च एतान् विना किमपि कर्तुं पारयन्ते ज्येष्ठाश्रमिभिरेतैरेव तेषां निर्वाहसम्भवात् ।

अत एव तु दण्डग्रहणनियते पारमहंस्ये धर्मावतारस्य युधिष्ठिरस्यासीत्सुदृढः संकल्पस्तायाऽपि चाचधर्ममेवासेविष्ट स न । तु संन्यास्यदिति महाभारते स्मर्यते यथा ।

अथवैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन् भैक्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥ १ ॥
पांसुभिः समभिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ २ ॥
न शोचं न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः ॥ ३ ॥
आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः काञ्चित्संविदं जातु केनचित् ॥ ४ ॥
जङ्गमाजङ्गमान्सर्वानविहिंसंश्चतुर्विधान् ।
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति ॥ ५ ॥
न चाप्यवहसन्कञ्चिन्न कुर्वन् भ्रुकुटीः क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ ६ ॥
अपृच्छन् कस्य चिन्मार्गं प्रव्रजन्नेव केनचित् ।
न देशं न दिशं काञ्चिद्गन्तुमिच्छन् विशेषतः ॥ ७ ॥
गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुःप्रणिहितो गच्छंस्त्रसस्थावरवर्जकः ॥ ८ ॥
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि ।
द्वन्द्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् ॥ ९ ॥

अल्पं वा स्वादु वा भोज्यं पूर्वालाभेन जातुचित्।
अन्येष्वपि चरँल्लाभमलाभे सप्त पूरयन्॥ १०॥
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने।
अतीतपात्रसंचारे काले विगतभिक्षुके॥ ११॥
एककालं चरन्भैक्ष्यं गृहे द्वे च पञ्च वा।
स्नेहपाशं विमुच्याहं चरिष्यामि महीमिमाम्॥ १२॥
अलाभे सति वा लाभे समदर्शी महातपाः।
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन्॥ १३॥
जीवितं मरणं चैव नाभिनन्दन्न च द्विषन्।
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः॥ १४॥
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः।
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः॥ १५॥
सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः।
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः॥ १६॥
अपरित्यक्तसंकल्पः सुनिर्णिक्तात्मकल्मषः।
विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः॥ १७॥
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः।
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीम्॥ १८॥
तृष्णया हि महत्पापमज्ञानादस्मि कारितः।
कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः॥ १९॥
कार्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति।
आयुषोऽन्ते प्रहायेदं क्षीणप्राणं कलेवरम्॥ २०॥
प्रतिगृह्णाति तत्पापं कर्तुः कर्मफलं हि तत्।
एवं संसारचक्रेऽस्मिन् व्याविद्धे रथचक्रवत्॥ २१॥

समेति भूतग्रामोऽयं भूतग्रामेण कार्य्यशत् ।
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ॥ २२ ॥
अपारमिव चास्वस्थं संसारं त्यजतः सुखम् ।
दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ॥ २३ ॥
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ।
कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम् ॥ २४ ॥
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते ।
तस्मात्प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितम् ॥ २५ ॥
तत्प्राप्य प्राप्नुये स्थानमव्ययं शाश्वतं ध्रुवम् ।
एतया सततं धृत्या चरन्नेवंप्रकारया ॥ २६ ॥
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥ २७ ॥ इति,

तदनेन प्रबन्धेन स्पष्टं ब्राह्मणस्येव क्षत्रियस्यापि चतुर्थाधिकारिता सति तीव्रवैराग्ययोगे संन्यासनियतसर्वधर्मोपेता सिध्यति । प्रकृतमनुसरामः देवाश्चापि यज्ञभुज इति तानेव चीन् वर्णान् गृहिणोऽपेक्षन्ते तान् विना तेषां यज्ञभागस्याप्यनिर्वाहात् । तथाऽऽह मनुः तस्माज्ज्येष्ठाश्रमो गृही । इति तस्मात् । यत एते गृहिणो वर्णास्ततः शान्तिधर्मेषु शान्तिप्रधानवानप्रस्थसंन्यासाद्याश्रमेषु । असक्तान् स्वभावतोऽप्रसक्तान् मत्वा विष्णुस्सर्वलोकपालनगृहीतभारस्तेषां गृहस्थाश्रमातिरिक्तं वानप्रस्थादि नेच्छति नानुमन्यते लोकभरणभङ्गभियेति तात्पर्यार्थः । यदि क्षत्रियवैश्यशूद्रा अपि प्रसक्ताः शान्त्याश्रमेषु तर्हि लोकयात्रैव न स्यादिति तु परमतात्पर्यम् । अत एव त्विहैव ।

अनेन ग्रन्थेन स्पष्टं न्यासः सिध्यति, अयं पुनर्विशेषो यच्छूद्रस्यालिङ्गः काषाय-दण्डरहितः पुराणेतिहासादिद्वारा आत्मश्रवणोपयिकः संन्यासः, क्षत्रविशोस्तु पूर्वोक्तरीत्या सलिङ्ग एकदण्डकमण्डल्वादिसहितः भैक्ष्यन्तु सर्वेषां समानमात्मधारणेन श्रवणोपयिकत्वात्। अयं चापरो विशेषो यत्क्षत्रियस्य मानुषानपेक्षा दण्डग्रहणे। विशस्तु क्षत्रियानुष्ठानमावश्यकं दण्डग्रहे। शूद्रस्य चालिङ्गोऽपि न्यासः क्षत्रियाद्यनुष्ठानेनैव सिध्यतीति, अत शूद्रप्रमुखसंन्यासाभिधानेन क्षत्रविशोः संन्यासस्य कैमुतिकसिद्धत्वमप्यावेद्यते भीष्मेण वदतांवरेत्यपि सुसूक्ष्ममीक्षणाम्।

अयं चापरोविशेषो यन्मुमुक्षोर्ब्राह्मणस्य यथा श्रवणेऽतिशयाधानहेतुत्वेन संन्यासानुष्ठानमपेक्ष्यते न तथा क्षत्रादीनां, यथा इदंचाह समनन्तरं भीष्मः।

न चैतन्नैष्ठिकं कर्म त्रयाणां भूरिदक्षिण!।

त्रयाणां क्षत्रविट्शूद्राणामेतत् संन्यासरूपं कर्म न नैष्ठिकम्। न नित्यं किन्तु सर्वथा वैराग्ये सत्येव तेषामधिकारो ब्राह्मणानां त्वन्यवैराग्यमात्रेणाप्यधिकारः अत एव क्षत्रियादयो हंसपरमहंसयोरेवाधिकारिणो न तु कुटीचकबहूदकयोस्तयोरन्यवैराग्ययोगिसुलभाधिकारकत्वात्, अपि तु गृहस्थाश्रमे वेदान्तश्रवणस्य सर्वथा व्यवधाने कुटीचकबहूदकयोरपि क्षत्रियादयो भवन्त्यधिकारिणो नान्यथेति तु परमार्थः।

यदि क्षत्रियस्य न्यासो न नित्यस्तर्हि किं तदस्ति यन्नित्यमाराध्यं क्षत्रियस्येति युधिष्ठिरजिज्ञासायामाह भीष्मः।

पक्षान्ते पूर्वापरगीतावाक्यविरोधमादर्शयितुं वैदिके कर्माङ्गकभक्तिभावापन्नज्ञानस्य मोक्षहेतुतासिद्धान्ते । ते पुनराहोपुरुषिकावलम्बनमात्रदृष्टिप्रवृत्ता इत्यतिस्पष्टतया निरूपणीयमस्माभिरस्मदीये गीतासन्दर्भे स्नेहपूर्तिमहानिबन्धे चेति कृतमिह तदीयनिराकरणवाग्विलापनप्रलपितेन जिज्ञासुजनोपयुक्ततत्त्वनिरूपणमात्रप्रवृत्तानां नः ।

गायत्र्यैव न वा ऽन्यया द्विजपदं तन्मन्त्रमीमांसया,
चातुर्वर्ण्यसपत्नयत्नशतकं विध्वंस्य तस्य स्थितिम् ।
तिष्ये* ऽपीत्यनुपाकृतोपनयनं सद्व्रात्यमीमांसया
तार्तीयीकतया† विवाहसमयं किञ्च व्यवातिष्ठिपम् ॥ १ ॥
इत्थं दुर्नय‡शोधनैः सुविहिते निष्कण्टके वैदिके
चातुर्वर्ण्यपदाभिधे ऽध्वनि पर चत्वार एवाश्रमाः ।
शोध्यास्तत्र तुरीय एव गहनो दुर्वादिदुर्नीतिभि-
स्तन्निष्कण्टकताकृते कृतिरियं तुर्या ऽपि पर्याप्यते ॥ २ ॥
आम्नायोदितधर्मधारणविधौ धैर्यावधूताशयं
वैदेही निरवद्यनित्यभगवत्पादाम्बुजोपाश्रिता ।
या श्री§र्मायिजनेन दुर्नयवता दुर्यातना लम्भिता
सा रामेण विधूय तं पुनरपि क्षेमं प्रतिष्ठापिता ॥ ३ ॥
‖वैदेही निरवद्यनित्यभगवत्पादाम्बुजोपाश्रिता
श्रीःस्ता प्रक्रियया त्रिकृष्य सहसालङ्कारपर्योद्धृतेः ।

---

* तिष्ये कलौ ।

† तार्तीयीकतया तृतीयत्वेन तार्तीयिक्या तया मीमांसया वा ।

‡ नयो नीतिश्च न्यायः ।

§ यतीनां तु चतुर्थमित्यादिधर्मशास्त्रबोधितस्वधर्मानुष्ठाने कातरैर्मायासंन्यासिभिः या श्रीः संन्यासधर्मसंपत् नैष्कर्म्यवादेन विधर्षिता सा शोधितेत्यर्थः ।

‖ श्रीवैदेही देवी श्रीरामेण पुनः क्षेमं नीतेति च ध्वनिः स्वयमूहनीयो ऽत्र ।

येस्तत्तन्निरमायि मायिभिरहो मोक्षाध्वविध्वंसनं
तान् रामेश विधूय निर्भयपदं सा स्नेहपूर्त्या ऽञ्चिता ॥ ४ ॥
*एड्वर्डेति च यः सप्तमनृपः श्रीभारताधीश्वर-
स्तत्साम्राज्यपदाधिकारसमये तावत् समयन्थ्ययम् ।
यन्थः, स्ताद्भगवत्कटाक्षसुधया तस्या ऽनिशं भावुकं
येना ऽज्ञानतमांसि लुम्पतु सदा विद्यानवद्योदयः ॥ ५ ॥

इति श्रीपरमपूरुषकृपासरित्पूरपरीवाहपूर्णपात्रस्य सारस्वत-साम्राज्यदीक्षणविचक्षणस्य सत्संप्रदायाचार्यसर्वतन्त्रस्वतन्त्रपण्डित-स्वामिश्रीराममिश्रशास्त्रिणः सत्कृतिषु धर्मममर्ममीमांसासु तुरीया-श्रमनिर्णये क्रमागता तुरीयमीमांसा ॥

सन्तु नः शुभाशिषः पूर्वाचार्याः श्रियं श्रीधरं चारभ्यास्मदाचार्य-पर्यन्ता जगन्मङ्गलविग्रहा इति साञ्जलिपुटमभ्यर्थयामहे ॥

सं० १९५० । फाल्गुनकृष्णपञ्चम्यां शुक्रे

श्रीः श्रीः श्रीः श्रीः श्रीः ॥





* Edward VII, King of Great Britain and Ireland, and Emperor of India.

चतुर्णां राजशार्दूल! प्राहुराश्रमवासिनाम्।
आह्वायत्तं क्षत्रियैर्मानवाना लोकश्रेष्ठं धर्ममासेवमानैः।
सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादिति वेदाच्छृणोमि॥
यथा राजन्! हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि।
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध॥
अल्पश्रमानल्पफलान् वदन्ति धर्मानन्यान् धर्मविदो मनुष्याः।
महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः॥
सर्वे धर्मा राजधर्मप्रधानाः सर्वे वर्णाः पाल्यमाना भवन्ति।
सर्वस्त्यागो राजधर्मेषु राजँस्त्यागं धर्मं चाहुरग्र्यं पुराणम्॥
मज्जेत् त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विबुद्धाः।
सर्वे धर्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते राजधर्मे पुराणे॥
सर्वे त्यागा राजधर्मेषु दृष्टाः सर्वा दीक्षा राजधर्मेषु चोक्ताः।
सर्वा विद्या राजधर्मेषु युक्ताः सर्वे लोका राजधर्मे प्रविष्टाः॥
यथा जीवाः प्राकृतैर्वध्यमाना धर्मश्रुतानामुपपीडनाय।
एवं धर्मा राजधर्मैर्वियुक्ताः सञ्चिन्वन्तो नाद्रियन्ते स्वधर्मम्॥ इति,

अयमिहार्थः—धर्मतः प्रजाः पालयता राज्ञा तत्तद्वर्णधर्मरक्षितया तत्तदाश्रमधर्मरक्षकतया च सर्ववर्णाश्रमधर्मभाजः सर्ववर्णाः सर्वाश्रमाश्च क्षत्रिया इति किं तेषामुत्कटवैराग्ययोग विना आश्रमान्तरगवेषणया एवमेव तु।

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥

इत्यष्टमेऽध्याये मनुरमन्यत, अत एव त्विह।

येस्तातन्निरमायि मायिभिरहो मोक्षाध्वविध्वंसनं
तान् रामेण विधूय निर्भयपदं सा स्वेष्टपूर्त्या ऽञ्चिता ॥ ४ ॥
*एड्वर्डेति य एष सप्तमनृपः श्रीभारताधीश्वर-
स्साम्राज्यपदाधिकारसमये तावत् समभ्यर्च्यताम् ।
धन्यः स्वाङ्गदस्फटाक्षसुधया तस्या ऽनिशं भावुकं
येना ऽज्ञानतमांसि लुम्पतु सदा विज्ञानसद्योदयः ॥ ५ ॥

इति श्रीपरमपूज्यकृपावरिष्ठवरदीक्षाहपूर्णपादस्य सारस्वत-साम्राज्यदीक्षणविचक्षणस्य सर्वसंप्रदायाचार्यसर्वतन्त्रस्वतन्त्रपण्डित-स्वामिश्रीराममिश्रशास्त्रिणः सत्कृतिषु धर्ममर्ममीमांसासु तुरीया-श्रमनिर्णये क्रमागता तुरीयमीमांसा ॥

सन्तु नः शुभाशिषः पूर्वाचार्याः शिवं श्रीधरं चारभ्यास्मदाचार्य-पर्यन्ता जगन्मङ्गलविग्रहा इति साञ्जलिपुटमभ्यर्थयामहे ॥

सं १९५० । फाल्गुनकृष्णपञ्चम्यां शुक्रे

श्रीः श्री श्रीः श्रीः श्रीः ॥





* Edward VII, King of Great Britain and Ireland, and Emperor of India.

चतुर्थो राजशार्दूल! प्राहुराश्रमवासिनाम्।
गाहायत क्षत्रियैर्मानववाना लोकश्रेष्ठ धर्ममासेवमानैः।
सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादिति वेदाच्छृणोमि॥
यथा राजन्! हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि।
एवं धर्मान् राजधर्मेषु सर्वान् सर्वावस्थं सम्प्रलीनान्निबोध॥
अल्पाश्रमानल्पफलान् वदन्ति धर्मानन्यान् धर्मविदो मनुष्याः।
महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः॥
सर्वे धर्मा राजधर्मप्रधानाः सर्वे वर्णाः पाल्यमाना भवन्ति।
सर्वस्त्यागो राजधर्मेषु राजंस्त्यागं धर्मं चाहुरग्र्यं पुराणम्॥
मज्जेत् त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विबुद्धाः।
सर्वे धर्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते राजधर्मे पुराणे॥
सर्वे त्यागा राजधर्मेषु दृष्टाः सर्वा दीक्षा राजधर्मेषु चोक्ताः।
सर्वा विद्या राजधर्मेषु युक्ताः सर्वे लोका राजधर्मे प्रविष्टाः॥
यथा जीवाः प्राकृतैर्वध्यमाना धर्मश्रुतानामुपपीडनाय।
एवं धर्मा राजधर्मैर्वियुक्ताः सञ्चिन्वन्तो नाद्रियन्ते स्वधर्मम्॥ इति,

अयमिहार्थः—धर्मतः प्रजाः पालयता राज्ञा तत्तद्वर्णधर्मरक्षकतया तत्तदाश्रमधर्मरक्षकतया च सर्ववर्णाश्रमधर्मभाजः सर्वे-षर्णाः सर्वाश्रमाश्च क्षत्रिया इति किं तेषामुत्कटवैराग्ययोगं विना आश्रमान्तरगवेषणया एवमेव तु।

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥
इत्यष्टमेऽध्याये मनुरमन्यत, अत एव त्विह।

सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादित्युक्तम् ।

धर्मादिति ल्यब्लोपे पञ्चमी, ततश्च राज्ञो धर्ममपेक्ष्य त्रयाणां ब्रह्मविट्शूद्राणां ये धर्मास्ते क्षत्रियस्य सोपधर्मा उपसर्जनीभूता यतः स सर्वधर्मरक्षकतया स्वधर्मेण प्रधानेन सह सर्वधर्मभागि *त्यर्थः । अत एव त्विह भीष्मेण अन्यधर्माणामल्पाश्रयत्वमल्पफ-* लत्वं चाभिधाय क्षात्रधर्मस्य महाश्रयत्वं बहुकल्याणरूपत्वं चोक्तम् ।

महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः । इति,

न्याय्यं चैतत् क्षात्रधर्मोपघाते त्रयीधर्मविलोपेन सर्वधर्मविप्रलोपसम्भवात् । इदमेवाभिप्रेत्योक्तम्—

मज्जेत् त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विवृद्धाः ।

इत्यादि, तस्मात् स्मृतिपुराणादिषु । क्षत्रियस्य त्रयः प्रोक्ता द्वावेकौ वैश्यशूद्रयोः । इति यदाश्रमाभिधानं न तत्परिसंख्यानाय इतोऽन्ये तेषामाश्रमा न भवन्तीत्यभिप्रायेण किन्तु ब्रह्मणा परमेश्वरेण तेषामन्ये प्रजापालनादयो धर्मा अनुष्ठेयत्वेन निर्दिष्टा इति परमवैराग्ययोग विना तैस्त एवोपासितव्या न तु सत्यव्रतुल्यपुरुषानुष्ठेयाः संन्यासादय इति तात्पर्यम् । तस्माच्छ्रुतिस्थस्य मानवशास्त्रस्थस्य च ब्राह्मण पदस्य संन्यासोपयिकज्ञानवत्त्वपरतया वैराग्यैकोपलक्षकतया वा संन्यासेन द्विजोत्तम' । इति स्मृतिस्थस्य द्विजोत्तमशब्दस्य च द्विजेषु यः सत्त्व कुल्यादिविशिष्टस्तत्परतया च सर्वेषां विधिनिषेधशास्त्राणामर्थवत्तया साधु प्रसाधिताः क्षत्रियादीनां संन्यासान्ता आश्रमा धर्म्या इति ।

एवमत्र श्रुतिस्मृत्याद्यभिमतः सुव्यवस्थितार्थः सम्यवस्था-दुर्जिवत्वन्त्रसम्मतिकानां ब्राह्मणानां कुत्सित्रिदण्डपक्षः । समस्त-

त्वाद्दविक्करोऽविष्ठनिकानां प्रजानुरञ्जननिर्भराणां राजन्यानां विशां च तीव्रवैराग्ये एकदण्डः, युगान्तरे स्त्रीणामप्येकदण्डः । स्त्रीणां चैके इति बोधायनेन प्रव्रज्यास्मरणात् । ये तु पुनर्ब्राह्मणा अप्यपक्वकषाया विष्ठतप्रकृतयस्ते पुनरेकदण्ड एवाधिक्रियन्ते । ये तु क्षत्रियाः वैश्या द्विजास्त्रियोऽपि च क्षालितान्तःकरणकषायाः परिपक्वमतयो भगवन्निष्ठास्तेऽपि च त्रिदण्डाधिकारिणः, अत एव महाभारते शान्तिपर्वणि तत्रतत्र सुलभाजनकसंवादादौ त्रिदण्डिमहिमनिर्देशपुरस्सरं क्षत्रजातीयस्त्रीणामपि त्रिदण्डधारणाधिकृतिरवगम्यते तद्यथा ।

तया जगदिदं सर्वमटन्त्या मिथिलेश्वरः ।

तत्रतत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥

इति स्पष्टमेव मोक्षकथाप्रधानैर्भ्यास्त्रिदण्डिभ्यो जनकनामश्रवणस्य सुबहुमानास्पदत्वाम्नानम् । एवमेव तु तत्रैव प्रकरणे जनकराजोऽपि कथाप्रस्तावेन सुलभामाह ।

सुखी सोऽहमवाप्तार्थः समलोष्ठाश्मकाञ्चनः ।

मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥

इति स्वस्यान्यैस्त्रिदण्डिभिर्वैशिष्ट्यं बहुमानास्पदमिति मेने ।

त्रिदण्डिषु अवाप्तसमस्तार्थतायाः परमात्मतत्त्वज्ञानेन सुखितायाः समलोष्ठाश्मकाञ्चनतया मुक्तसङ्गत्वस्य च सौलभ्यसंभवात् । कदाचित्तु वैराग्यपरिपाकभाजा देहात्माध्यासविधुराणां केषाचिन्मान्यतमानां त्रिदण्डग्रहणानन्तरं तस्य त्यागोऽप्यनुमन्यते । अत एव महाभारते सुलभाजनकमहाराजौ समुद्दिश्य भीष्मं परमधर्ममर्मवेत्ता युधिष्ठिरमाह ।

तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम् ।

छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके ॥ इति.

सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मादित्युक्तम् ।

धर्मादिति ल्यब्लोपे पञ्चमी, ततश्च राज्ञो धर्ममपेक्ष्य त्रयाणां ब्रह्मविट्शूद्राणां ये धर्मास्ते क्षत्रियस्य सोपधर्मा उपसर्जनीभूता यतः स सर्वधर्मरक्षकतया स्वधर्मेण प्रधानेन सह सर्वधर्मभागित्यर्थः । अत एव त्विह भीष्मेण अन्यधर्माणामल्पाश्रयत्वमल्पफलत्वं चाभिधाय क्षात्रधर्मस्य महाश्रयत्वं बहुकल्याणरूपत्वं चोक्तम् ।

महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं नेतरं प्राहुरार्याः । इति,

न्याय्यं चैतत् क्षात्रधर्मोपघाते सर्वधर्मविलोपेन सर्वधर्मविप्रलोपसम्भवात् । इदमेवाभिप्रेत्योक्तम्—

मज्जेत् त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विवृद्धाः ।

इत्यादि, तस्मात् स्मृतिपुराणादिषु । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः । इति यदाश्रमाभिधानं न तत्परिसङ्ख्यानाय इतोऽन्ये तेषामाश्रमा न भवन्तीत्यभिप्रायेण किन्तु ब्रह्मणा परमेश्वरेण तेषामन्ये प्रजापालनादयो धर्मा अनुष्ठेयत्वेन निर्दिष्टा इति परमवैराग्ययोगं विना तैस्त एवोपासितव्या न तु सत्त्वबहुलपुरुषानुष्ठेयाः सन्यासादय इति तात्पर्यम् । तस्माच्छ्रुतिस्थस्य मानवशास्त्रस्थस्य च ब्राह्मणपदस्य सन्यासौपयिकब्राह्मण्यवत्परतया वैराग्योपलक्षकतया वा संन्यासेन द्विजोत्तमः । इति स्मृतिस्थस्य द्विजोत्तमशब्दस्य च द्विजेषु यः सत्त्वबाहुल्यादिविशिष्टस्तत्परतया च सर्वेषां विधिनिषेधशास्त्राणामर्थवत्तया साधु प्रसाधिताः क्षत्रियादीनां सन्यासान्ता आश्रमा धर्म्या इति ।

अयमत्र श्रुतिस्मृत्याद्यभिमतः सुव्यवस्थितार्थः सम्भवत्साहजिकसत्त्वसम्पत्तिकानां ब्राह्मणानां मुख्यस्त्रिदण्डपक्षः । सम्भव-

तत्त्वानवबोधविजृम्भितं मैत्रायणीयश्रुतौ इन्द्रस्य वज्रोऽसीति त्रीन् वैणवान् दण्डान् दक्षिणे पाणौ धारयेदेकं वेत्यादिना स्पष्टमेव श्रुतौ वैणवत्रिदण्डस्य धार्यत्वाभिधानेन स्मार्तत्वोक्तेरबोधोपहतत्वात् । यत्तु त्रिदण्डस्य कुटीचकबहूदकधार्यत्वाभिधानं तत्तु युक्तमेव हंस-परमहंसपर्यन्तानां न्यासिनामेककण्ठ्येन हारीतदत्तात्रेयपितामहै. ।

वृत्तिभेदेन भिन्नास्ते नैव लिङ्गेन ते द्विजाः ।

लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम् ॥

इत्येकलक्षणाभिधानेन वैणववैष्णवत्रिदण्डस्य मुख्यत्वेना-ख्यानात्, अत एव तु दक्षः सर्वानेव चतुर्थाश्रमिणो लिलक्षयिषुरेक-दण्डस्य ब्रह्मचारिलक्षणत्वमभिधाय वैणवत्रिदण्डस्य न्यासिसामा-न्यलक्षणतां चाख्याय ।

यस्यैतल्लक्षणं नास्ति स पाखण्डी न चाश्रमी ।

इति वैणवत्रिदण्डलक्षणवैधुर्ये पाखण्डित्वमाचक्षाणश्चतुर्था-श्रमित्वव्यतिरेकमब्रुवन्न चाश्रमीति सुस्फुटमभिब्रुवन् । एतेन तत्र परमहंसा नाम त्रिदण्डजलपवित्रयज्ञोपवीतशिक्यान्तर्वासधारिण' । इति पराशरस्मृतेरदर्शनेनाप्रामाण्यसमर्थनं तद्‌घूकानवलोकनेन भा-स्करासत्त्वसमर्थनप्रायं त्वदीयग्रन्थेष्वेव त्वया प्रमाणत्वेनाङ्गीकृतासु पञ्चपासु स्मृतिषु चतुर्णामपि न्यासिनां वैणवत्रिदण्डस्य धार्यत्वाभि-धानेन परमहंसस्य तद्धार्यत्वसिद्धेर्विदुषामकौतस्कुतास्पदत्वात् ।

त्वदभिमताः स्मृतयो हि न केवलं परमहंसानां त्रिदण्ड-धारणमात्रं विदधते किं त्वतादृशां पाखण्डित्वाख्यानेन अनाश्रमि-त्वमपीति किमस्ति मूलं येन पराशरस्मृतेः परमहंसस्य त्रिदण्ड-विधायिकायाः अप्रामाण्यं समूहसे । प्रत्यक्षश्रुतिविरुद्धार्थाभिधायि-

अथ राजचिह्नैर्दण्डादिभिर्विमुक्तो जनकमहाराजः । त्रिदण्डविनिर्मुक्ता तु सुलभा, तातस्य त्यागस्य दण्डग्रहणपूर्वकत्वेन सुलभायाः क्षत्रियकुमारिकाया अपि विविदिषाधिकारबलेन त्रिदण्डपरिग्रहस्तत्परित्यागश्चेति द्वयं स्फुटं विद्यति अन्यथा मुक्तायाश्च त्रिदण्डके इत्यभिधानं कथं सङ्गच्छताम् । न हि विविदिषाधिकारिण्यास्तस्या आन्तरत्रिदण्डविनिर्मुक्तिकथनं सम्भाव्येतापि येन तथार्थमभिधायैवानर्थकथनेन कृतकार्यः स्यात् ।

एतेन पराशरस्मृतिभाष्ये माधवाचार्याणां सर्वे चैव त्रिदण्डिनः इत्यत्रिस्मृतेर्वाग्दण्डमनोदण्डकर्मदण्डात्मकान्तरदण्डपरत्वेन अत्रिस्मृत्यर्थकदर्थनमप्यपास्तम् । सर्वत्र स्मृतीतिहासपुराणादौ महात्मनामान्तरत्रिदण्डिनां बहिरपि धर्म्यत्रिदण्डस्य धार्यत्वाभिधानात् । अत एव पितामहः ।

परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत् ।

यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डधृक् ॥ इति,

न चेहापि त्रिदण्डपदेन वाग्दण्डादिविषयं सुग्रहं तथा सति बाह्यान्तरेन्द्रियनिग्रहरूपाणां यमनियमानां यमैश्च नियमैर्युक्त इत्यनेनैवाभिधाने पौनरुक्त्यापातात् ।

न च तत् त्रिदण्डपदार्थस्वरूपनिरूपणपरमेवाभिधानमिति वाच्यम् । तथा सति यमैश्चेति चकाराघासङ्गत्यप्रसङ्गात् । नियमापेक्षया यमेषु चकारार्थसङ्गमनं तु दुर्घिषणतामेवावेदयेत् । तथा सति नियमैश्चेति वक्तव्ये प्रथमत एव यमैश्चेति चकारोपादानवैयर्थ्यात् । विस्तरेण चैतदुपपादितमिहैवान्यत्र स्वावसरे इत्युपरम्यते ।

यदपि वैष्णवैष्णवत्रिदण्डस्य स्मार्तत्वाख्यानमुखेन कुटीचकबहूदकमात्रपरत्वसमर्थनं तत्तु श्रुतिस्मृतिवचनानां स्वरूपतोऽर्थ-

श्रुत्यर्थे परतन्त्रदृष्टीनामस्माकं स्मृत्यनुसारेणैव श्रुत्यर्थस्य वक्तव्यतया नाणुमपि विरोधमीक्षामहे येन स्मृतिरनपेक्षणीया स्यात् । श्रुत्यर्थव्यवस्थापनं हि स्मृतीतिहासपुराणानां परमं कृत्यमन्यथा मन्दमतीनां श्रुत्यर्थावगतिरेव न सिद्ध्येद् यथाऽऽह भगवान् व्यासः ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इति,

एतेन परमहंसस्य शिखासूत्रादिसत्त्वबोधकस्मृतीतिहासपुराणानामनवलोक्यैवार्थं प्रत्यक्षश्रुतिविरोधाद् बुद्धादिस्मृतितुल्यत्वमुत्प्रेक्षमाणा एकदण्डिनः *कल्पतरुकारप्रभृतयोऽपि दूरपरास्ताः । श्रुतिमुपसेवमानासु स्मृतिषु† विरोधस्यैवाभावात् । न ह्यविरोधे बाध्यबाधकभावं कश्चिदाचक्षीत । तस्माच्छ्रुत्यर्थव्यवस्थापनतात्पर्येण प्रवृत्तासु सतीषु तपस्विनीषु स्मृतिषु आत्मौपम्येन मिथ्यैव श्रुतिव्यभिचारितार्थाभिधानदुश्चरित्रसमुद्भावनम् ।

किंच यदि परमहंसस्य शिखासूत्रकर्मादित्यागस्त्रिदण्डादित्यागश्च यथाश्रुतार्थानुरोधेन मन्येत तर्हि अनुष्ठानभूयिष्ठे त्रिदण्डे नास्तिकोऽनुपद्येत । जनो हि स्वभावतः कर्मपराङ्मुखवृत्तिरलसो नास्तिकश्चेति स्वनुष्ठाने एकदण्डे शिखासूत्रादित्यागपुरस्सरे एव प्रवर्तेत । अत एव तु पौराणिकाः परमहंसशिरोमणेर्जडभरतस्योपवीतं स्मरन्ति ।

तथा हि पुराणाचार्यो व्यासः श्रीमद्भागवते ।
कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुतत्य इहासि कस्मात्क्षेमाय नश्चेदसि नोत शुक्लः ॥

* अत्रत्यमवशिष्टं स्वेदपूर्तिमहानिबन्धं वक्तव्यमित्युपेक्षामहे ।
† स्मृत्यनवकाशाधिकरणं तु पृथगर्थमिति भावः ।

त्वेनाप्रामाण्यशङ्कनमपि मितमतित्वमेवावेदयेदिति न तदपि प्राचतापरिचायकं तासां तदतात्पर्यकत्वस्यास्माभिस्तत्रतत्र बहुधोपपादित्वात् ।

किंच यथा न हिंस्यात्सर्वाभूतानि नानृतं वा वदेत् क्वचिदिति श्रुतिः सर्वभूतहिंसां सर्वथाऽनृतभाषणं च प्रतिषेधन्ती वार्ध्रीणस–मात्स्य–हारिण–कौरभ्र–शाकुन–छाग–पार्षतैणरौरव–वाराह–शाश–मांसैः पितॄणां कालविशेषनियतां* तृप्तिं बोधयन्तीभिर्मानवादिस्मृतिभिर्विषयविशेषे व्यवस्थाप्यते । सङ्कोच्य व्यवस्थाप्यते च ।

विवाहकाले चटुसम्प्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थेऽप्यनृतं वदेत्पञ्चानृतान्याहुरपातकानि ॥

इति स्मृत्यनुरोधेन अनृतपञ्चकातिरिक्तानृतभाषणे वानृतवदनवर्जननिषेधश्रुतिः । न हि श्राद्धे एतैरामिषैः पितॄणामेतावती तृप्तिरिति बोधिका श्रुतिर्मन्त्राद्यतिरिक्ताऽदृष्टा श्रुता वा, न वाऽनृतपञ्चकातिरिक्तानृतभाषणप्रत्यवायव्यवस्थापनपरा श्रुतिरुपलब्धा कर्णाकर्णिकतयाऽऽकर्णि वा अनुविणा, तथाऽपि स्मृतिः श्रुत्यर्थव्यवस्थापनेन श्रुतिं निषेधते एवेत्यङ्गीक्रियते एवमेव परमहंसानामेकदण्डं चोदयन्त्यः श्रुतयः स्मृतिभिर्विषयविशेषे व्यवस्थाप्यन्ते एवमेव च ।

उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ।
एकमेव यतीनां स्यादिति शास्त्रविनिर्णयः ॥

इत्यादि स्मृत्यनुसारेण बहिःसूत्रं त्यजेदित्यादिश्रुत्यर्थोऽपि व्यवस्थाप्य इति क्वास्ति विरोधगन्धोऽपि येन स्मृतेरप्रामाण्यमाशङ्क्येत

* अत्रत्यं विस्पष्टमर्थमहिंसासंदर्भे निरूपयिष्यामः ।

श्रुत्यर्थे परतन्त्रदृष्टीनामस्माकं स्मृत्यनुसारेणैव श्रुत्यर्थस्य वक्तव्यतया नाणुमपि विरोधमीक्षामहे येन स्मृतिरनपेक्षणीया स्यात् । श्रुत्यर्थव्यवस्थापनं हि स्मृतीतिहासपुराणानां परमं कृत्यमन्यथा मन्दमतीनां श्रुत्यर्थावगतिरेव न सिद्ध्येद् यथाऽऽह भगवान् व्यासः ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इति,

एतेन परमहंसस्य शिखासूत्रादिसत्त्वबोधकस्मृतीतिहासपुराणानामनवलोक्यैवार्थं प्रत्यक्षश्रुतिविरोधाद् बुद्धादिस्मृतितुल्यत्वमुत्प्रेक्षमाणा एकदण्डिनः *कल्पतरुकारप्रभृतयोऽपि दूरपरास्ताः । श्रुतिमुपसेवमानासु स्मृतिषु† विरोधस्यैवाभावात् । न ह्यविरोधे बाध्यबाधकभावं कश्चिदाचक्षीत । तस्माच्छ्रुत्यर्थव्यवस्थापनतात्पर्येण प्रवृत्तासु सतीषु तपस्विनीषु स्मृतिषु आत्मौपम्येन मिथ्यैव श्रुतिव्यभिचारितार्थाभिधानदुश्चारित्रसमुद्भावनम् ।

किंच यदि परमहंसस्य शिखासूत्रकर्मादित्यागस्त्रिदण्डादित्यागश्च यथाश्रुतार्थानुरोधेन मन्येत तर्हि अनुष्ठानभूयिष्ठे त्रिदण्डे कोऽनुपश्येत । जनो हि स्वभावतः कर्मपराङ्मुखवृत्तिरलसो नास्तिकश्चेति स्वनुष्ठाने एकदण्डे शिखासूत्रादित्यागपुरस्सरे एव प्रवर्तेत । अत एव तु पौराणिकाः परमहंसशिरोमणेर्जडभरतस्योपवीत स्मरन्ति।

तथा हि पुराणाचार्यो व्यासः श्रीमद्भागवते ।
कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुत्रत्य इहासि कस्मात्क्षेमाय नश्चेदसि नोत शुक्लः ॥

* अत्रत्यमवशिष्टं सेहपूर्तिमहानिबन्धे वक्तव्यमित्युपेक्षामहे ।
† स्मृत्यनपेक्षाधिकरणं तु पृथगर्थमिति भावः ।

इति, अयमर्थः । निगूढोविशेषतोऽनभिलक्षितवर्णाश्रमाचारस्त्वं कोवा विचरसि, द्विजानां दत्तात्रेयादीनां मध्ये त्वं कतमोऽवधूतः स्वरूपवदेहेऽपि द्विजत्वे तु न संदेहः, यतः सूत्रमुपवीतं बिभर्षि। एतेनावधूतानां दत्तात्रेयादीनामपि शिखासूत्रादिसिद्धिः । अतो विशेषतो ब्रूहि त्वं कस्य पुत्रोऽसि कुतत्यः किंदेशवास्यसि । इहास्मिन् स्थानेऽपि कस्माद्धेतोरागतोऽसि । यः कोऽपि भवेयं किमनेन तव प्रश्नसरम्भेणेत्यत आह । क्षेमायेति । नोऽस्माकं क्षेमाय चेदिह प्राप्तोऽसि तर्हि किं शुक्रः शुद्धसत्त्वमूर्तिः कपिलोऽसि शुद्धसत्त्वमूर्तयो भागवता हि गृहमागत्यापि गृहिणोऽनुगृह्णन्ति किमु मध्ये मार्गे मिलितस्यानुग्रहपारवश्यसम्भावनेति रहूगणोऽज्ञातभरतरहस्यो भगवन्तं भरतमिदमाह । स्फुटमिदमेतेन यत्कण्ठमावेष्ट्य फूत्कुर्वन्तं कृष्णसर्पं ये न द्विषन्ति न चापनयन्ति सन्तस्ते कथमुपवीतमेवाकस्माद् विप्णुद्विषाणा वा ऽपनयेयुरिति, किन्तु न तेऽभिमानभाजो गृहस्था इवोपवीते यथा हि गृहस्थाः शलक्ष्णधौतोपवीताः परिमृष्टसुपुष्टदेहा भवन्त्यभिमानभाजो न तथा भरताद्या ब्रह्मदृष्टयो भागवताः । अत एव तु वैष्णवे पुराणरत्ने भगवता पराशरेणापि भगवन्तं भरतमुद्दिश्य ।

आत्मनोऽधिगतज्ञानोदेवादीनि महामुने ! ।

सर्वभूतान्यभेदेन स ददर्श महामतिः ॥ इति सस्मरे ।

तस्मात्सत्यपरमहंसानां जडभरतादीनां कण्ठेऽपि चेदुपवीतं तर्हि देहात्माभिमानभाजां कृत्रिमपरमहंसानां त्रिदण्डत्यागमात्रेण वा एकदण्डग्रहणमात्रेण वा शिखायज्ञोपवीतत्यागेन कर्मसंन्यासद्वेषेण वा जडभरतादिदृष्टान्तावष्टम्भेन पारमहंस्यं नाटयतां कर्मत्यागमात्रेण स ध्यनुष्ठितं पारमहंस्यमिति सन्तोऽभिदधतोऽपि सङ्कुचन्ति ।

तस्माच्छिखासूत्रादिमन्तस्त्रिदण्डा ब्राह्मणेषु मुख्याः परमहंसाः । क्षत्रिय–वैश्येषु तु एकदण्डा एव मुख्याः परमहंसाः । ते च ब्राह्मण–क्षत्रियाः सन्न्यस्यन्तः कृतत्रेतादिषु युगेषु यत्यादिपदेन व्यपदिष्टा अभूवन् न तु तेषामननुरूपेण स्वामिपदेन ।

द्रविडन स्वामिन इति न वाच्या । इदानीन्तनानामनिपुणमतीनां गृहस्थानां यतिषु महात्मसु वीतसर्वरागेषु सांसारिकपदार्थजातेष्वहम्ममाभिमानसम्बन्धगन्धशून्येष्वकिञ्चनेषु स्वामिपदव्यवहारस्तु तेषां महात्मनामननुरूपो वैरूप्यावह एव सर्वथा, ये हि सर्वमवहेल्य गृहापत्यकलत्राणि तृणाय मन्यमानास्समुपेक्षमाणाश्च वस्तुतो नि स्वाः पर्य्यव्राजिषुः ते कथं स्वामिनो भवन्ति यथाऽऽह विश्वेश्वरपद्धतौ भगवानत्रिः ।

कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम् ।
पादुके चापि गृह्णीयात्कुर्य्यान्नान्यस्य संग्रहम् ॥
यदि वा कुरुते रागादधिकस्य परिग्रहम् ।
नरकं रौरवं गत्वा तिर्य्यग्योनिषु जायते ॥
कौपीनं युगुलं कन्था दण्ड एकः परिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥
शीर्णानि चामलान्येव चेलानि ग्रथितानि तु ।
कृत्वा कन्थां बहिः सोऽपि धारयेद्धातुरञ्जिताम् ॥ इति,

स्पष्टमिदमेतेन यत्कन्थादण्डपरिग्रहा महात्मानो यतयो निष्परिग्रहा न स्वामिनो भवितुमर्हन्ति नापि कृतस्वात्मसमर्पणानां गृहस्थानामभक्तिनिबन्धनोऽपि तादृशव्यवहारस्तेषु सम्भवी तदीयाऽऽत्ममानहानिहेतुत्वात्स्वामिपदव्यवहारस्य, एवञ्च ते नि स्वा भिक्षव

आत्मनिष्ठा यतयस्संन्यासिनश्चतुर्थाश्रमिण इत्यादिस्वस्वरूपानुरूपं शास्त्रीयं व्यपदेशमर्हन्तीति निरूपकाः ।

ये पुनर्लिप्समाना धनिकाननुविवृत्सवः, विवृत्सवो व्यवहारेषु देशाद्देशान्तरम्भृशमटन्तो नाटयन्ति चतुर्थाश्रमं केवलं दण्डमादाय दृष्टादृष्टाभीष्टसिद्ध्यर्थम्प्रयतमाना मिष्टमिष्टमश्नन्तो रसानपि बहुपभुज्य तृप्तिमनाप्नुवन्तो नवस्वपि रसेषु व्यसनिनः सपरिग्रहाः क्षिप्रवृत्तयस्ते काममभिधीयन्तां स्वामिन इति तेषां तादृशव्यपदेशस्य स्वानुरूप्यनिबन्धनत्वादिति ।

वस्तुतस्तु स्वामिन्नैश्वर्ये । अ० ५ । पा० २ । सू० १२६ ॥

इति यतेरननुरूपार्थादैश्वर्य्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच्प्रत्ययः पाणिनिनापि सस्मरे । तस्माद्गृहस्था धनधान्यापत्यकलत्रवन्तो वपुष्मन्तः श्रोत्रियाः ये ब्राह्मणक्षत्रियाः शास्त्रानुसारिवृत्तयश्चातुर्वर्ण्यव्यवस्थापकास्ते स्वामिन इति प्रविविञ्चते विवेचकाः ॥

अथोपनिषद्भ्यः स्मृतिभ्योग्रन्थान्तरेभ्यश्च श्रुतिस्मृतिवचनानि समाहृत्य यतिधर्मान् प्रस्तुमः ।

तत्र बोधायनः—

उषः काले समुत्थाय शौचं कृत्वा यथाविधि ।
दन्तान् विमृज्य चाचम्य पर्ववर्जं यथाविधि ॥
स्नात्वा चाचम्य विधिवत्तिष्ठन्नासीन एव वा ।
क्षिप्रज्जलपवित्रं वाऽऽप्यदसूत्रं करद्वये ॥
तद्वत् पवित्रे गोवालैः कृते दुष्कृतनाशने ।
उदये विधिवत् सन्ध्यामुपास्य त्रिकजप्यवान् ॥
मित्रस्य चर्षणीत्याद्यैरुपस्थाय परिश्रिभिः ।
पूर्ववत् तर्पयित्वाऽथ जपेत् सम्यक् समाहितः ॥ इति,

मनुरपि ।

एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।

सिद्धिमेकस्य सम्पश्यन् न जहाति न हीयते ॥ इति,

एकस्यासहायस्य विचरतो रागद्वेषादि-प्रतिबन्धाभावात् ज्ञानलक्षणां सिद्धिं निश्चिन्वन् तां सिद्धिं न जहाति तस्यां सिद्धावप्रत्यूहेन प्रवर्तते प्रवृत्तश्च तस्याः सिद्धेर्न हीयते किन्तु पारं गच्छति । यदा तु द्वितीय तृतीयपुरुषसहायवान् विचरेत्तदा रागद्वेषसम्भवादुक्तसिद्धेर्हीयते ।

अत एव दक्षः—

एकोभिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् ।

त्रयो ग्रामः समाख्याता ऊर्द्ध्वन्तु नगरायते ॥

नगरन्तु न कर्त्तव्यं ग्रामोऽपि मिथुनं तथा ।

एतत्त्रयं प्रकुर्व्वाणः स्वधर्म्माच्च्यवते यतिः ॥

राजवार्त्ता हि तेषान्तु भिक्षावार्त्ता परस्परम् ।

स्नेह-पैशुन्य मात्सर्य्यं सन्निकर्षान्न संशयः ॥ इति,

यदा तु श्रवणादि-सम्पत्त्यभावादात्मज्ञानसिद्धौ स्वयमशक्तः स्यात् तदा तत्र शक्तेन द्वितीयेन सह विचरेत् । यथाऽऽह श्रुतिः । वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वौ वा । चरेतामित्यर्थः । एकाकी विचरेत् सर्व्वभूतेभ्यो हितमाचरेत् । तदाह याज्ञवल्क्यः ।

सर्वभूतहितः शान्तः त्रिदण्डी सकमण्डलुः ।

एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत् ॥ इति,

हिताचरणं नाम हिंसाऽननुष्ठानमात्रं न पुनरुपकारेषु प्रवृत्तिः । हिंसाऽनुग्रहयोरनारम्भः । इति गौतमस्मरणात् । अत एवाहिंसादीनाहापि ।

अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ।
भावशुद्धिर्हरेर्भक्तिः सन्तोषः शौचमार्जवम् ॥
आस्तिक्यं ब्रह्मसंस्पर्शः स्वाध्यायः समदर्शनम् ।
अनौद्धत्यमदीनत्वं प्रसादः स्थैर्य्यमार्दवे ॥
सस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।
उपेक्षा धैर्य्यमाधुर्य्ये तितिक्षा करुणा तथा ॥
ह्रीस्तपो ज्ञानविज्ञाने योगो लघ्वशनं धृतिः ।
स्नानं सुरार्चनं ध्यानं प्राणायामो बलिः स्तुतिः ॥
भिक्षाऽटनं जपः सन्ध्या त्यागः कर्म्मफलस्य च ।
एष स्वधर्म्मो विख्यातो यतीनां नियतात्मनाम् ॥ इति,

प्रव्रज्यां कृत्वाऽपि गुरोः समीपे ब्रह्मज्ञानपर्य्यन्तं निवसेत् । तदुक्तं लिङ्गपुराणे ।

आश्रमत्रयमुक्तस्य प्राप्तस्य परमाश्रमम् ।
ततः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ॥
अनुज्ञाप्य गुरुञ्चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
पिधाय बुद्ध्या द्वाराणि ध्यानेनैकमना भवेत् ॥ इति,

मत्स्यपुराणेऽपि—

गुरोरपि हिते युक्तः स तु संवत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्म्मस्य चरेत पृथिवीं यतिः ॥ इति,

संवत्सरमित्युपलक्षणं यावज्ज्ञानं तावन्निवसेत् गुरुसमीपवासस्य ज्ञानार्थत्वात् । पृथिवीविचरणे विशेषमाह कण्वः—

एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥ इति,

मत्स्यपुराणेऽपि—

अष्टौ मासान् विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासान् वार्षिकान् निवसेत् पुनः ॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।
न दोषो भविता तत्र दृष्टं शास्त्रं पुरातनम् ॥ इति,

चातुर्मास्यनिवासे दृष्टमपि प्रयोजनमाह मेधातिथिः—

संरक्षणार्थं जन्तूनां वसुधातलचारिणाम् ।
आषाढादींश्च चतुर आमासान् कार्त्तिकाद् यतिः ॥
धर्म्मार्थे जलसम्पन्ने ग्रामान्ते निवसेच्छुचिः । इति,

अन्यानपि यतेर्हेयानुपादेयांश्च धर्म्मान् संगृह्याह स एव—

श्रद्धया परयोपेतः परमात्मपरायणः ।
स्थूलसूक्ष्मशरीरेभ्यो मुच्यते दशषट्कवित् ॥
त्रिदण्डं कुण्डिकां कन्थां मैत्रभाजनमासनम् ।
कौपीनाच्छादनं वासः एतेतानि परिगृह्णेत् ॥
स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
एतेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥
रसायनं क्रियावादं ज्योतिषं क्रयविक्रयम् ॥
विविधानि च शिल्पानि वर्ज्जयेत् परदारवत् ।
भिक्षाटनं जपं स्नानं ध्यानं शौच सुरार्चनम् ॥
कर्त्तव्यानि एतेतानि सर्वथा नृपदण्डवत् ।
नटादिप्रेक्षणं द्यूतं प्रमदां सुहृदं तदा ॥

भक्ष्यं भोज्यमुदक्यां च षण्ढं न पश्येत् कदाचन ।
स्कन्धावारे खले सार्थे पुरे ग्रामे च सद्गृहे ॥
न वसेत यतिः षट्सु स्थानेष्वेतेषु कर्हिचित् ।
राग द्वेष मदं मायां दम्भं मोहं परात्मसु ॥
षडेतानि यतिर्नित्यं मनसाऽपि न चिन्तयेत् ।
मञ्चकं शुक्लवस्त्रं च स्त्रीकथां लौल्यमेव च ॥
दिवास्वापश्च यानश्च यतीनां पतनानि षट् ।
संयोगश्च वियोगश्च वियोगस्य च साधनम् ॥
जीवेश्वरप्रधानानां स्वरूपाणि विचिन्तयेत् ।
आसनं पात्रलोपश्च सञ्चयः शिष्यसंग्रहः ॥
दिवा स्वापो वृथा जल्पो यतेर्बन्धकराणि षट् ।
एकाहात्परतो ग्रामे पञ्चाहात् परतः पुरे ॥
वर्षाभ्योऽन्यत्र तत्स्थानमासनं तदुदाहृतम् ।
उक्तानां यतिपात्राणामेकस्यापि न संग्रहः ॥
भिक्षोर्भैक्षभुजश्चापि पात्रलोपः स उच्यते ।
गृहीतस्य त्रिदण्डादेर्द्वितीयस्य परिग्रहः ॥
कालान्तरोपभोगार्थं सञ्चयः परिकीर्तितः ।
शुश्रूषालाभपूजाऽर्थं यशोऽर्थं वा परिग्रहः ॥
शिष्याणां न तु कारुण्यात् सन्नेहः शिष्यसंग्रहः ।
विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ॥
विद्याऽभ्यासे प्रमादो यः स दिवा स्वाप उच्यते ।
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ॥
अनुग्रहप्रदः प्रश्नो वृथा जल्पः स उच्यते ।
अजिह्वः षण्डकः पङ्गुरन्धोबधिर एव च ॥

मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ।
इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जति ॥
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ।
सद्योजातां यथा नारीं तथा षोडशवार्षिकीम् ॥
शतवर्षाञ्च यो दृष्ट्वा निर्विकारः स षण्डकः ।
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ॥
योजनान्न परं याति सर्वथा पङ्गुरेव सः ।
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरगम् ॥
चतुर्युगद्वयं त्यक्त्वा परिव्राट् सोऽन्ध उच्यते ।
हिताहितं मनो रामं वचः शोकावहं यतिः ॥
श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ।
सान्निध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः ॥
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ इति ।

भिक्षाऽटनविधिमाह मनुः—
एककालं चरेद् भैक्ष्यं न प्रसज्येत विस्तरे ।
भैक्षप्रसक्तो हि यतिर्विषयेष्वपि सज्जते ॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवर्जिते ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥ इति,

मीयन्ते—इति मात्रा विषयास्तेषां सङ्गाद्विनिर्गतो यतस्ततो न हर्ष-विषादौ कार्यौ । यमोऽपि—
स्नात्वा शुचिः शुचौ देशे कृतजप्यः समाहितः ।
भिक्षाया प्रविशेद्ग्रामं रागद्वेषविवर्ज्जितः ॥

चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि ।
एकान्नं न तु भुञ्जीत बृहस्पतिसमो यतिः ॥
भैक्ष्यं भैक्षं चरेन्नित्यं सायाह्ने वाग्यतः शुचिः ।
एकवासा विशुद्धात्मा मन्दगामी युगान्तदृक् ॥
यथालब्धं तथाऽश्नीयादाज्यसंस्कारवर्ज्जितम् ।
भैक्षं माधूकरं नाम सर्वपातकनाशनम् ॥ इति,

बौधायनोऽपि—

विधूमे सन्नमुसले व्यङ्गारे भुक्तवर्ज्जिते ।
काले पराह्णभूयिष्ठे भिक्षाऽटनमथाचरेत् ॥
ऊर्द्ध्वं जान्वोरधो नाभेः परिधायैकमम्बरम् ।
द्वितीयमान्तरं वासः पात्री दण्डी च वाग्यतः ॥
सव्ये चादाय पात्रन्तु त्रिदण्डं दक्षिणे करे ।
उपनिष्ठेन मूर्ध्यन्तु ध्यात्वा चैकत्वमात्मना ॥
उक्त्वा विराजनं मन्त्रमाकृष्येन प्रदक्षिणम् ।
कृत्वा पुनर्जपित्वा च ये ते पन्थान इत्यपि ॥
योऽसौ विष्णवाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः ।
सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम् ॥
भिक्षापात्रादिशुद्ध्यर्थमभ्युक्ष्याप्युपानहौ ।
ततो ग्रामं व्रजेन्मन्दयुगमात्रावलोककः ॥
ध्यायन् हरिञ्च तच्चित्त इदं च समुदीरयेत् ।
विष्णुस्तिर्यगधोर्द्ध्वे मे वैकुण्ठोविदिशन्दिशम् ॥
पातु मां सर्वतो रामो धन्वी चक्री च केशवः ।
अभिगम्य गृहाद्भिक्षां भवत्पूर्व्वं प्रचोदयेत् ॥

गोदोहमात्रं तिष्ठेत्तु यावतोऽधो मुखस्ततः ।
दृष्ट्वा भिक्षां दृष्टिपूतां दातुश्च करसंस्थिताम् ॥
छिद्रखण्डं दक्षिणे त्वङ्गे ततः सन्धाय बाहुना ।
उत्पाटयेत्तु कवचं दक्षिणेन करेण सः ॥
पात्रं वामकरे क्षिप्रा स्लेपयेद् दक्षिणेन तु ।
प्राणयात्रिकमन्नन्तु भिक्षेत विगतस्पृहः ॥ इति,

भैक्षस्य पञ्चविधत्वमाहोशना—
माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकोपपन्नञ्च भैक्षं पञ्चविधं स्मृतम् ॥
मनःसङ्कल्परहितान् गृहांस्त्रीन् सप्त पञ्चकान् ।
मधुवदाहरणं यत्तु माधूकरमिति स्मृतम् ॥
शयनोत्थापनात् प्राग् यत् प्रार्थितं भक्तिसंयुतैः ।
तत्प्राक्प्रणीतमित्याह भगवानुशना मुनिः ॥
भिक्षाऽटनसमुद्योगात् प्राक् केनापि निमन्त्रितम् ।
अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ॥
उपस्थाने च यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन तु ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः ॥ इति,

भिक्षान्नं प्रशंसति यमः—
यश्चरेत् सर्ववर्णेषु भैक्षमभ्यवहारतः ।
न स किञ्चिदुपाश्नीयादापो भैक्षमिति स्थितिः ॥
अब्बिन्दुं यः कुशाग्रेण मासि मासि स्वयं पिबेत् ।
न्यायतो यस्तु भिक्षाशी पूर्व्वोक्तात् विशिष्यते ॥

तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ।
पिबेद् द्वादशवर्षाणि न तद्भैक्षं समं भवेत् ॥
शाकभक्षाः पयोभक्षा येऽन्ये यावकभक्षकाः ।
सर्वे भैक्षभुजस्तस्य कलां नार्हन्ति षोडशीम् ॥
न भैक्षं परपाकान्नं न च भैक्षं प्रतिग्रहः ।
सोमपानसमं भैक्षं तस्माद्भैक्षेण वर्त्तयेत् ॥ इति,

अथ सर्ववर्णेभ्योऽप्यापद्विषयम् । अत एव बोधायनोऽपि—

ब्राह्मणक्षत्रियविशां भैक्ष्यानामन्नमाहरेत् ।
असम्भवे तु पूर्वस्याप्याददीतोत्तरोत्तरम् ॥
सर्व्वेषामप्यभावे तु भक्तत्रयमनश्नता ।
भैक्षं शूद्रादपि ग्राह्यं रक्ष्याः प्राणा विजानता ॥ इति,

न च भिक्षां लब्धुमुल्कापातादुत्पातकथनं ग्रहदोषस्यादिकथनमन्यं वा कञ्चिदुपाधिं सम्पादयेत् । तदाह बोधायनः ।

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥ इति,

वर्ज्यमन्नमाहात्रिः ।

हितं मितं सदाऽश्नीयाद्यत्सुखेनैव जीर्य्यति ।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः ॥
उद्दिश्य चोदितं चान्नं द्विजान्नं शूद्रचोदितम् ।
प्रत्यक्षं चापि संक्लृप्तं तदन्नं वर्जयेद्यतिः ॥
पिचछे कल्पितं पूर्वमन्नं देवा*दिकारणात् ।
वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा ॥ इति,

* भगवदाराधनातिरिक्तदेवार्चनावधानादिनिषेधोऽयम् ।

परपाधाप्रवृत्तिमेवाभिप्रेत्य मनुराह

न तापसैर्ब्राह्मणैर्वा वयोभिरथवा श्वभिः ।
आकीर्णं भिक्षुकैर्वाऽन्यैरागारमुपसंव्रजेत् ॥ इति,

यस्तु भिक्षां दातुं शक्तोऽपि नास्तिक्यान्न प्रयच्छति तद्गृहं वर्जयेदित्याह बोधायनः—

भिक्षां न दद्युः पञ्चाहं सप्ताहं वा कदाचन ।
यस्मिन् गृहे जना मौर्ख्यात् त्यजेत्तद्बालवेश्मवत् ॥ इति,

अनिन्द्यगृहस्य वर्ज्जने बाधमाह स एव—

साधुं चापतितं विप्रं यो यतिः परिवर्जयेत् ।
स तस्य सुकृतं दत्त्वा दुष्कृतं प्रतिपद्यते ॥ इति,

यस्तु दरिद्रः श्रद्धालुतया स्वयमुपोष्यापि भिक्षां प्रयच्छति तस्य भिक्षा न ग्राह्या । तदुक्तं स्मृत्यन्तरे

आत्मानं पीडयित्वाऽपि भिक्षां यः संप्रयच्छति ।
सा भिक्षा हिंसिता ज्ञेया नादद्यात्तादृशीं यतिः ॥ इति,

भिक्षार्थं बहुषु गृहेषु पर्य्यटितुमलसमप्रत्याह बोधायनः—

एकत्र लोभाद् यो भिक्षुः पात्रपूरणमिच्छति ।
दाता स्वर्गमवाप्नोति भोक्ता भुञ्जीत किल्बिषम्—इति,

यतिपात्रं विविनक्ति मनुः—

अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥
अलाबुं दारुपात्रं वा मृन्मयं वैणवं तथा ।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥ इति ।

यमोऽपि—

हिरण्मयानि पात्राणि कृष्णायसमयानि च ।
यतीनां तान्यपात्राणि वर्ज्जयेत्तानि भिक्षुकः ॥

बोधायनोऽपि—

स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः ।
भुञ्जीत न वटाश्वत्थकरञ्जानान्तु पर्णके ॥
कुम्भीतिन्दुकयोर्वाऽपि कोविदारार्कयोस्तथा ।
आपद्यपि न कांस्ये तु मलाशी कांस्यभोजनः ॥
सौवर्णे राजते ताम्रमये वा त्रपुसीसयोः—इति,

भोजननियममाह स एव । भिक्षाचर्य्यादुपावृत्तो हस्तौ पादौ च प्रक्षाल्याचम्यादित्यस्याग्रे निवेदयन्नुदुत्यं चित्रमिति ब्रह्मयज्ञानमिति च उद्वयं तमसस्परीति च जपित्वा भुञ्जीत इति । नृसिंहपुराणेऽपि—

ततो निवर्त्य तत्पात्रं संस्थाप्याचम्य संयमी ।
चतुरङ्गुलेषु प्रक्षाल्य ग्रासमात्रं समाहितः ॥
सर्व्वव्यञ्जनसंयुक्तं पृथक्पात्रे निवेदयेत् ।
सूर्य्यादिदेवभूतेभ्यो दत्त्वाऽन्नं प्रोक्ष्य वारिणा ॥
भुञ्जीत पर्णपुटके पात्रे वा वाग्यतो यतिः ।
भुक्त्वा पात्रं यतिर्नित्यं क्षालयेन्मन्त्रपूर्व्वकम् ॥
न दुष्येत्तस्य तत्पात्रं यज्ञेषु चमसा इव ।
अथाचम्य निरुद्धासुरुपतिष्ठेत भास्करम् ॥
जपध्यानविशेषेण दिनशेषं नयेद्बुधः ।
कृतसन्ध्यस्ततो रात्रिं नयेद्देवगृहादिषु ॥

हृत्पुण्डरीकनिलये ध्यात्वाऽऽत्मानमकल्मषम् ।
यतिर्धर्म्मरतः शान्तः सर्व्वभूतसमो वशी ॥
प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्त्तते–इति,

कूर्म्मपुराणेऽपि
आदित्ये दर्शयित्वाऽन्नं भुञ्जीत प्राङ्मुखो यतिः ।
हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ॥
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ।
प्राणाचेऽपराणे च मध्याह्ने तथैव च ॥
सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम्–इति,

अथान्ये यतिधर्म्माः ।

तत्राङ्गिराः ।
अतः परं प्रवक्ष्यामि आचारो यो यतेः स्मृतः ।
अभ्युत्थानप्रियालापैर्गुरुवत्प्रतिपूजनम् ॥
यतीनां व्रतवृद्धानां स्वधर्म्ममनुवर्तिनाम् ।
विष्णुरूपेण वै कुर्य्यान्नमस्कारं विधानतः ॥ इति,

मनुरपि–
कृतकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥
कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्द्देशं भृतको यथा ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामयः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
संरक्षणार्थं भूतानां रात्रावहनि वा सदा ।
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥
अल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥ इति,

ब्रह्मचर्याद्याश्रमिषु विशेषमाह मदनपारिजाते अङ्गिराः

गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि ।
शौचवच्छोधनं कुर्युरर्वाग् ब्रह्मनिदर्शनात् ॥ इति,

ब्रह्मनिदर्शनादर्वाग् ब्रह्मसाक्षात्कारात्पूर्वमित्यर्थः, अत्र शौचवच्छोधनं कुर्युरित्युक्तं तत्र शौचे विशेषमाह अङ्गिराः ।

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥ इति,

अयमर्थः—यथा शौचमाश्रमिणां गृहस्थापेक्षयाऽधिकं तथा तेषां प्रायश्चित्तमपि पादवृद्ध्याऽभिवर्द्धते ।

नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन ।
एतैः सर्वैः सुनिष्पन्नो यतिर्भवति नेतरः ॥ इति,

बृहस्पतिरपि—

न किञ्चिद्वैपजादन्यदद्याद्वा दन्तधावनात् ।
विना भोजनकालन्तु भक्षयेदात्मवान् यतिः ॥
नैवाददीत पाथेयं यतिः किञ्चिदनापदि ।
पक्कमापत्सु गृह्णीयाद्यावदन्नोपभुज्यते ॥
न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥ इति,

नाध्येतव्यमित्येतत् कर्मकाण्डादिविषयम् । अन्यथा उपनिषदमावर्त्तयेत्—इति श्रुतिर्बाध्येत—न श्रोतव्यमित्येतद् ब्रह्ममीमांसाव्यतिरिक्त-विषयम् । श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति तन्मीमांसाया विहितत्वात् उपपन्नश्च तीर्थोपवासाध्ययन-व्याख्यान-तात्पर्य्य-निषेधः निवृत्तिधर्मप्रधानत्वात् कैवल्याश्रमस्य । यतः स एवाह—

यस्मिन् पापः प्रविष्टाः स्युः कूपे प्राप्ताः शिला इव ।
न यत्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
यस्मिन् कामाः प्रविशन्ति विषयेभ्योऽपसंहृताः ।
विषया न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
यस्मिन् क्रोधः शमं याति विफलः सम्यगुत्थितः ।
आकाशेऽसिर्यथा क्षिप्रः स कैवल्याश्रमे वसेत् ॥
यस्मिन् शान्तिः शमः शौचं सत्यं सन्तोष आर्जवम् ।
आकिञ्चन्यमदम्भश्च स कैवल्याश्रमे वसेत् ॥
वृथाप्रलापी यो न स्यान्न लोकाराधने रतः ।
नान्यविद्याऽभियुक्तश्च स कैवल्याश्रमे वसेत् ॥

अतीतान्न स्मरेद्भोगांस्तथैवानागतानपि ।
प्राप्तांश्च नाभिनन्देत स कैवल्याश्रमे वसेत् ॥
अन्धवन्मूकवत् पङ्गुबधिरक्लीबवच्च यः ।
आस्ते व्रजति यो नित्यं स कैवल्याश्रमे वसेत् ॥

उक्तधर्मोपेतं यतिं प्रशंसति दक्षः—

सञ्चितं यद्गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥
संन्यसन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति ॥

तदेवं संक्षेपतो यतिधर्मा निरूपिताः ।

गृहस्थोऽर्हति प्रणवमुपासितुम् ।

संन्यासिनां जप्यमन्त्रेषु भगवन्नारायणपरा द्वादशाक्षरोङ्कारादिमन्त्राः प्रधानतमास्तत्र मितमतयः केचन प्रणवोपासनां गृहस्थादेर्नानुमन्यन्ते तदयुक्तं तथा हि छान्दोग्ये ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथोपासनायाः सामान्येनैवाभिधानात्सर्वाश्रमिण एव वेदार्थिका भवन्त्यधिकारिणः प्रणवोपासने, अत एव त्विहैव प्रकरणे आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते इति यजमानकामावाप्तिहेतुत्वमुद्गीथोपासनाया अभिधीयते, न हि यजमानार्थमुपासना संन्यासिनः सम्भवति, अत एव त्विह आप्ता इत्यनभिधाय आपयिता इति प्रयोजकणिजन्तप्रयोगपुरस्कारः । एवमेव त्विह—आपयिता ह वै कामानां यजमानस्य भवति य एतदक्षरमेवाप्तिगुणवदुद्गीथमुपास्ते इति शङ्कराचार्या अपि प्राहुः । अत एव स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्, तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनम्, इति योगसूत्र्याऽपि प्रणवोपासना

चाश्रमविशेषनैरपेक्ष्येण त्रैवर्णिकानां बोध्यते—प्रणवेन परं ब्रह्म ध्यायीत नियतो यतिः इत्यादिवचनेषु यतिपदं प्रायिकत्वाभिप्रायं तस्य त्यक्तसर्वपरिग्रहस्य ब्रह्मानुचिन्तनैकतानचित्ततायाः सुसम्भवात् अत एव ।

व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्तिताः ।
अर्द्धमात्रापरं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः ॥

इत्यादिपुराणवाक्येषु सामान्यतोऽध्यात्मचिन्तकैरित्येवोक्तं न तु यतिभिरिति प्रणवपुरःसरोपासनायाः सर्वाश्रमस्थत्रैवर्णिकसाधारणत्वात् अत एव ।

तस्मादोमित्युदाहृत्य यज्ञदानतपः*क्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

अथ ब्रह्मवादिनामित्युक्तम्, न हि यज्ञदानयोर्भिक्षवोऽधिकुर्वते, यथा हि श्रीरामकृष्णादिशब्दानामविकलसर्वसम्पत्सम्पन्नभगवदवतारनिर्देशकत्वं तथाऽवतारिनिर्देशकत्वं प्रणवे, तेन च परमप्रियप्रणवपदेनावतारी भगवान् प्रसीदति यथाऽऽहुः पुराणाचार्याः ।

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥ इति,

स्वयं भगवानपि चोन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । इति प्रणवस्यावतारिनिर्देशकत्वलक्षणवैलक्षण्यं पुरस्कुर्वाण एव त्रैविध्यमभिदधे, अन्यथा परःसहस्रनाम्नोऽनन्तस्य त्रिधोऽभिधा इत्यतिकदर्थितमेवापद्येत ।

---

* तपःक्रिया इति पुस्तिकम् ।

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥

इति गीतासु यः प्रयातीत्यादिसामान्यनिर्देशपुरस्कारेण गीताचार्यस्य गृहस्थादिद्विजसाधारण्यं तात्पर्यविषयीभूतमिति न सुगमम् । अत एव त्वन्यथापीतिहासपुराणेषु ब्राह्मणवर्णियाणां गृहस्थवानप्रस्थाद्यवस्थानां प्रणवोपदेष्टृत्वमुपदेश्यत्वं च श्रूयते इति कृतं नो विस्तरेण ।

उक्तानां ब्रह्मचर्य्यादीनां संन्यासान्तानां चतुर्णामाश्रमाणां प्रत्येकमवान्तरभेदाश्चतुर्व्विधाः । तदुक्तं महाभारते—

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः एकैकस्य चतुर्विधाः ॥ इति,

तच चातुर्विध्यं कात्यायनस्मृतेर्व्याचक्षते । ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाश्चत्वार आश्रमाः षोडशभेदा भवन्ति । तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति । उपनयनादूर्द्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीते स गायत्रः । अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यं चरेत् प्रतिवेदं द्वादश द्वादश वा यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः । स्वदारनिरतः ऋतुकालगामी सदा परदारवर्ज्जितः स प्राजापत्यः । आप्रायणाद् गुरोरपरित्यागी स नैष्ठिको बृहन्निति । गृहस्था अपि चतुर्विधा भवन्ति वार्तोकवृत्तयः शालीनवृत्तयो यायावरा घोरसांन्यासिकाश्चेति । तत्र वार्ताकवृत्तयः कृषिगोरक्षवाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । शालीनवृत्तयो यजन्तो न याजयन्तोऽधीयाना नाध्यापयन्तो ददतो न प्रतिगृह्णतः शत-

संवत्सराभिः क्रियाभिर्य्यजन्त आत्मानं प्रार्थयन्ते । यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । घोरसंन्यासिका उद्धृत परिपूताभिरद्भिः कार्य्यं कुर्वन्तः प्रतिदिवसमास्तृतोञ्छवृत्तिमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मान प्रार्थयन्ते । वानप्रस्था अपि चतुर्विधा भवन्ति वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति । तत्र वैखानसा अकृष्टपच्योषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चयज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । औदुम्बरा बदरनीवारश्यामाकैरग्निपरिचरणं कृत्वा पञ्चयज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । वालखिल्या जटाधराश्चीरचर्मवल्कलपरिवृताः कार्त्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते । फेनपा जीर्णपर्णफलभोजिनो यत्र तत्र वा वसन्तः । परिव्राजका अपि चतुर्विधा भवन्ति, कुटी*चरा बहूदका हंसाः परमहंसाश्चेति । कुटीचराः स्वपुत्रगृहेषु भैक्ष्यचर्यां चरन्त आत्मानं प्रार्थयन्ते । बहूदकास्त्रिदण्डकमण्डलुजलपवित्रपादुकाऽऽसनशिखायज्ञोपवीतकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्त आत्मानं प्रार्थयन्ते । हंसा एकदण्डधराः शिखायज्ञोपवीतधारिणः कमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रम् एकरात्रं द्विरात्रं कृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते । परमहंसा नाम एकदण्डधराः मुण्डाः कन्या-कौपीनवाससो व्यक्ताव्यक्तलिङ्गा अव्यक्तलिङ्गा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुशिक्यपट्टजलपवित्रपादु-

* कुटीचका इति पाठान्तरम् ।

काऽऽसन–शिखायज्ञोपवीतत्यागिनः शून्यागारदेवगृहवासिनो न तेषां धर्मो नाधर्मो वा न सत्यं नापि चानृतं सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चनाः यथोपपन्नचातुर्वर्ण्यं भैक्षचर्य्याञ्चरन्त आत्मानं मोचयन्ते ॥ इति, अथापरे धर्माः, ।

भिक्षां सत्कृत्य योदद्याद्विष्णुरूपाय भिक्षवे ।
कृत्स्नां वा पृथिवीं दद्यात्तस्य तुल्यं न तत्फलम् ॥

हारीतः–

सर्वेषामपराधानां यतिनिन्दा गरीयसी ।
यतिर्नारायणः साक्षात्तस्मात्तां परिवर्जयेत् ॥

बौधायनः–

यतावागते स्वागतमित्युक्त्वाऽभ्युत्थायाऽऽसनं पादशौचमभ्यञ्जनं च दत्त्वा कुशलमभिभाष्योपासीत । काले त्वन्नं भैक्षमुपाहरेत् स तस्योपचार इति ।

ब्रह्माण्डपुराणे–

काले वा यदि वाऽकाले श्राद्धं कुर्य्यादतन्द्रितः ।
पितॄणां तृप्तिकामस्तु यतीन्प्राप्य द्विजोत्तमः ॥ इति,

दक्षः–

विना मांसेन मधुना विना दक्षिणयाऽग्निना ।
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ॥

स्कन्दपुराणे शिववाक्यम् ।

ब्रह्मा विष्णुश्च रुद्रश्च सवाध्या मरुतस्तथा ।
सकृद्भुक्तेन यतिना पितृदेवाः सवासवाः ॥
सर्वे ते तृप्तिमायान्ति दशवर्षाणि पञ्च च ।
जन्मकोटिसहस्रेषु पूजितस्तेन शङ्करः ॥

गृहे यस्य समायाति महाभागवतो यतिः ।
यतयः पूज्यमानास्तु सर्वे देवाः सुपूजिताः ॥
अपमाने कृते तेषां देवाः सर्वे ऽवमानिताः ।
सदोषं निर्गुणं वापि यतिः दुष्टं न कीर्तयेत् ॥
अज्ञानात्कीर्तयेद्यस्तु स याति नरकं ध्रुवम् ।
येनापमानितो भिक्षुस्तेनाहं चापमानितः ।
हरिब्रह्मादयो देवाः पितरो मुनिपुङ्गवाः ॥
तीर्थानि क्रतवः सर्वे भिक्षुके गृहमागते ।
यतिर्यस्य गृहस्थस्य सन्तुष्टो वसते गृहे ॥
तुष्टो भवति दैत्यारिर्यावदाभूतसंप्लवम् ।
ये नमन्ति यतिं दूराद् दृष्ट्वा काषायवाससम् ॥
राजसूयफलावाप्तिस्तेषां भवति पुत्रकाः ! ।
यतिरूपेण सर्वत्र विष्णुः पर्यटते महीम् ॥
भक्तानामनुकम्पायै महद्धर्मविवृद्धये ।
यदा कारयति स्नानं यतीनां यो द्विजोत्तमः ॥
स्नानजं लभते पुण्यं गङ्गायाः शतवार्षिकम् ।
कौपीनाऽऽच्छादने दण्डं वह्निर्वासश्च पादुकाः ॥
यो ददाति यथा शक्त्या पुण्यं तस्य वदाम्यहम् ।
दत्तं वाजिसहस्रन्तु मातङ्गानां शतत्रयम् ।
गोऽयुतस्य सहस्रस्य फलं प्राप्नोति मानवः ॥
कौपीनाच्छादनं वासं भिक्षुकेभ्यः प्रयच्छति ॥
वाजपेयसमं पुण्यं विष्णुमुद्दिश्य यत्कृते ।
ध्यानभिक्षुमतिक्रम्य यद्यन्यं भोजयेद्गृही ॥
तत्फलं समवाप्नोति सर्वे गोत्रं प्रतापयेत् ।

सुप्तं यतेन्द्रियं शान्तं ध्यानभिक्षुमकल्मषम् ॥
तान्नित्यं भोजयेच्छ्राद्धे दैवे पित्र्ये च कर्मणि ।
अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ॥
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ।
पक्वान्नस्वामिको भिक्षुर्यदि तस्मै न दीयते ॥
चान्द्रायणेन शुद्धिः स्यादिति च स्मृतिशासनम् ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।
लक्षलक्षाणि यो दद्याद् ब्राह्मणे वेदपारगे ॥
तथा तत्त्वविदे भिक्षां तयोस्तुल्यफलं भवेत् ।
संन्यासदिवसे यस्य यतिर्भैक्ष्यं समाचरेत् ॥
पुत्रं स लभते श्रेष्ठं सफलं तस्य जीवितम् ।
द्वितीयदिवसेऽप्येवं तृतीयेऽप्येवमेव हि ॥
अतस्त्रिदिनमध्ये तु यतिर्भोज्यः प्रयत्नतः ।

पराशरः ।

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवान्नं भिक्षुकं तु विसर्जयेत् ॥
यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥
वैश्वदेवकृतं दोषं भिक्षुः शक्तो व्यपोहितुम् ।
न हि भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ॥
निवेदयेत्तु यः श्राद्धे पितृकर्मणि भिक्षुकम् ।
आकल्पकालिकी तृप्तिः पितॄणामुपजायते ॥

बोधायनः ।

ब्रह्मनिष्ठे च संन्यस्ते पितर्युपरते मृते ।
सपिण्डीकरणं नैव कर्तव्यं तु सुतादिभिः ॥
सद्यःसंन्यसनादेव प्रेतत्वं नैव जायते ।
एकोद्दिष्टं न कर्तव्यं संन्यस्तानां कदाचन ॥

शौनकः ।

ब्रह्मीभूते च संन्यस्ते ताते च निधनं गते ।
न तस्य सूतकं कार्य्यं न च पिण्डादकक्रिया ॥
ब्रह्मीभूतस्य तस्याथ कर्तव्यं नैव विद्यते ।
दशाहे तु व्यतिक्रान्ते पुत्रः कुर्यात्तु पार्वणम् ॥
प्रत्यब्दं पार्वणं कुर्यादेष धर्मः सनातनः ।
द्वादशाहमनाध्यायं कुर्याच्छिष्यः समाहितः ॥
खननं वहनं स्पर्शं संस्कुर्वन् शुद्धिमिच्छति ।
स्नानमात्रेण लभते अश्वमेधं पदेपदे ॥
अपुत्रो लभते पुत्रं चिरंजीविनमुत्तमम् ।
निषेकादिस्मशानान्ता विधयो ब्राह्मणाश्रिताः ।
तस्माद्यतेस्तु संस्कारं मन्त्रवित्कुरुते गृही ॥
यतिदेहं गृही स्पृष्ट्वा स्नानमात्रेण शुध्यति ।
अश्वमेधफलं सर्वं सम्प्राप्नोति पदेपदे ॥
असंस्कृतं विशीर्येत यत्र देशे कलेवरम् ।
धर्मलोपो भवेत्तत्र दुर्भिक्षं मरणादिकम् ॥

तथा चोक्तं पितृमेधपद्धतौ

अग्निकुण्डे यतेः पुत्रो यदि स्वपितृनाशनम् ।
कृत्वापि वपनं स्नात्वा शुद्धात्मा यतिसत्क्रियाम् ॥

कुर्यादिति शेषः ।

अथन्निकृष्टश्चेत्पुत्रः सिद्धिवार्त्तां पितुस्तदा ।
स्नात्वा वपनपूर्वं तु शुक्लायां तदनन्तरम् ॥
दशम्यामेव कुर्य्यात्तु नारायणबलिं ततः ।
पार्वणं सिद्धिदिवसे कुर्य्यादज्ञान एव चेत् ॥
पार्वणं शुक्लपक्षे तु द्वादश्यां मार्गशीर्षके ।
आराधनं ततः कुर्यात्त्रयोदश्यां यतेर्गुरोः ॥
गुरुबुद्ध्या यतीन् विप्रान् ब्राह्मणान् पूजयेत्ततः ।
स्वगुरुं परमगुरुं परमेष्ठिगुरुं तथा ।
परात्परगुरुं चैव तत्तन्नाम्नाऽर्चयेत् क्रमात् ॥

उशना ।

यतौ मृते न वपनं नोदकं नैव च क्रिया ।
नाशौचं नैव शोकश्च बन्धूनां गोत्रिणामपि ॥
वृषोत्सर्गे न दाहं च विपन्ने स्याद्गुरौ यतौ ।
सपिण्डीकरणं तेषां न कर्तव्यं सुतेन तु ॥
एकोद्दिष्टं न कुर्वीत यतीनां तु कदाचन ।
मृते न दहनं कार्यं परमहंसस्य सर्वदा ॥
कर्तव्यं खननं तस्य नाशौचं नोदकक्रिया ।
अश्वत्थस्थापनं कार्यं तद्देशेऽध्वर्युणा मुने! ॥
अश्वत्थः स्थापितस्तेन स्थापितो हि महेश्वरः ।
दर्शनात्स्पर्शनात्तस्य सर्वं नश्यति पातकम् ॥
कुटीचकं सम्प्रदहेद्बहूदकं जले क्षिपेत् ।
हंसं चैव तु निक्षिप्य परमहंसं विकीरयेत् ॥

बोधायनः ।

यतीनां प्रेतसंस्कारविधिं व्याख्यास्यामः । गृहस्थः शुद्धात्मा विशेषतः स्नपयित्वा गन्धपुष्पादिभिरलंकृत्य शिक्ये शरीरमारोप्य घोषितं जयशब्देश्च दुन्दुभीनां स्वरैरपि । ग्रामात्प्राचीमुदीचीं च गत्वा शुद्धदेशं समाश्रयेत् । नदीतीरेऽश्वत्थवृक्षस्य ब्रह्मवृक्षस्याधस्ताद्देवयजनं दण्डायमानप्रमाणं खनित्वा लवणं प्रविश्य दर्भान्संस्तीर्य गायत्र्या शरीरं प्रक्षाल्य पुरुषसूक्तेन स्नपयित्वा शङ्खेन प्रणवेन शतसंख्येन स्नाप्य षोडशोपचारैर्गन्धपुष्पैरलंकृत्य विष्णो हव्यं रक्षस्वेति शरीरकुण्डे निधाय इदं विष्णुर्विचक्रमे इति दक्षिणहस्ते दण्डं भङ्क्त्वा निधाय हंसः शुचिषदिति हृदयदेशे जपेत् । ब्रह्मजज्ञानमिति मूर्ध्नि देशे जपेत् पुरुषसूक्तं भ्रुवोर्मध्ये जपेत् । ॐभूमिर्भूमिमगान्मागान्मामप्यतरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि समिन्धतमिति मन्त्रेण मूर्धानं भिन्द्यात् अश्मना परशुना वा । ॐभूर्भुवः स्वरोमित्यभिमन्त्र्य दर्भैराच्छाद्य मध्ये लवणेन घनतरेण सव्याहृतिभिः प्रणवेन देवयजनं पूरयेत् । अग्निनाऽग्निः समिध्यते इत्यनुमन्त्रयेत् । न तत्र शेषसंस्कारोऽस्ति । अन्यथा ग्राम्यादिमवर्षोऽनावृष्टिर्भवति । तस्माद्भूमिं भृशं खात्वा मृदा ह्याऽऽच्छादयेद्बुधः ।

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥
निदध्यात्प्रणवेनैव ध्यानभिक्षोः कलेवरम् ।
प्रोक्षणं खननं चैव सर्वथा नैव कारयेत् ॥
यतीन् वहन् स्पृशंश्चैव स्नानमात्रेण शुध्यति ।
अश्वमेधफलं सर्वं प्राप्नुवन्ति पृथक्पृथक् ॥

एकोद्दिष्टं जलं पिण्डं नाशौचं प्रेतसंक्रिया ।
न कुर्यात् पार्वणादन्यद् ब्रह्मीभूताय कल्पते ॥

कपिलः ।

वृद्धो तीर्थे च संन्यस्ते ताते च पतिते तथा ।
येभ्य एव पिता दद्यात् तेभ्यो दद्यात्सुतः स्वयम् ॥
यतेः कार्या क्रिया यस्य यतो ब्रह्मणि संस्थितः ।
ब्रह्मीभूतस्य यतेर्न दाहाद्याः कथञ्चन ॥

एवादिभिः साधनावस्थस्य कुटीचकस्य त्वब्रह्मविदो दहनादिकः क्रियाकलापः कार्य एव श्रुतः ।

संनिकृष्टो यतो तस्य पितर्युपरते सुतः ।
दहनं तस्य कर्तव्यं श्राद्धं पिण्डोदकक्रिया ॥ .

इति स्मृतेः ।

अनग्नेर्दहनं कार्यं पूर्वभिक्षोर्यथाविधि ।
विद्वस्तु न तत्कार्यं नैकोद्दिष्टादि कर्हिचित् ॥

पूर्वभिक्षुः कुटीचकः । बोधायनः

नारायणबलिं तस्य कुर्वीत द्वादशेऽहनि ।
कुर्याद्विष्णोर्महापूजां पायसं च निवेदयेत् ॥
अग्नौ हुत्वा तु तच्छेषं व्याहृतिभिः समाहितः ।
यतीन् गृहस्थान् साधून् वा निमन्त्य द्वादशावरान् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ।
सम्भोज्य हव्येनान्नेन दक्षिणां च निवेदयेत् ॥
त्रयोदश्यां द्विजश्रेष्ठमात्मवन्तं जितेन्द्रियम् ।
विष्णुं यथा तथाऽभ्यर्च्य पाद्याद्यैश्च विधानतः ॥

दद्यात्पुरुषसूक्तेन गन्धपुष्पादिकं क्रमात् ।
वस्त्रालङ्करणादीनि यथाशक्ति प्रदापयेत् ॥
तच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य्य भूतले ।
ओंभूःस्वधाओंभुवःस्वधाओंस्वःस्वधेति बलीन् हरेत् ॥
एवं यः कुरुते विद्वान्नारायणबलिन्ततः ।
विष्णुलोकमवाप्नोति पुरुषो नात्र संशयः ॥

अथ द्विजेषु ब्रह्मचर्य्यं विनाऽऽश्रमान्तरावलम्बनासम्भवात् सर्वाश्रमप्रकृतिभूतब्रह्मचर्यधर्माः प्रथक्तो निरूप्यन्ते । तत्र दक्षो ब्रह्मचारिविषये आह ।

स्वीकरोति यदा वेदांश्चरेद्वेदव्रतानि च ।
ब्रह्मचारी भवेत्तावदूर्द्धं स्नातो भवेद् गृही ॥ इति,

योगीश्वरः ।

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥

भास्करालोकने मनुना विशेषोऽभिहितः ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

मनुः ।

वर्जयेन्मधुमांसं च गन्धं माल्यं रसान् स्त्रियः ।
शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणे ।
कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम् ॥
द्यूतं च जनवादं च परिवादं तथाऽनृतम् ।
स्त्रीणां च प्रेक्षणालापमुपघातं परस्य वै ॥

एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् ।

योगीश्वरः ।

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।
ब्राह्मणेषु चरेद् भैक्षमनिन्द्येष्वात्मवृत्तये ॥
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ।
ब्राह्मणक्षत्रियविशां भैक्षचर्या यथाक्रमम् ॥
कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥
ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥

अयमर्थः—ब्रह्मचारी अनापदि व्याध्याद्यभावे एकान्नं न भुञ्जीत, ब्राह्मणः पुनः श्राद्धेऽभ्यर्थितः सन् काममश्नीयात् व्रतमपीडयन् मधुमांसादिपरिहारेणेत्यर्थः । क्षत्रियादेर्ब्रह्मचारिणः श्राद्धभोजननिषेधार्थं ब्राह्मणग्रहणम्, राजन्यवैश्ययोश्चैव नैतत्कर्म प्रचक्षते इति स्मरणात् ।

मनुः ।

अध्येष्यमाणः स्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ॥
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ।
प्राञ्जलिः पर्युपासीत पवित्रैश्चैव पावितः ॥

प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ।

पाणिनीयशिक्षायाम् ।

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । इति,

चातुराश्रम्यावलम्बनपक्षे ब्रह्मचर्यगृहस्थाश्रमौ क्रमेणाऽऽलम्ब्य तृतीयं वानप्रस्थाश्रममवलम्बेत तत्कालस्तु शङ्खेनाभिहितः ।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत् ॥

वानप्रस्थधर्मास्त्वाभिहिताः शङ्खेन—

पुत्रे दारान् विनिक्षिप्य तया वानुगतो वने ।
अग्नीनुपचरन्नित्यं वन्यमाहारमाहरेत् ॥
यदाहारो भवेत्तेन पूजयेत्पितृदेवताः ।
तेनैव पूजयेन्नित्यमतिथिं समुपागतम् ॥
ग्रामादाहृत्य चाऽश्नीयादष्टौ ग्रासान् समाहितः ।
स्वाध्यायं च तथा कुर्याज्जटाश्च बिभृयात्तथा ॥
तपसा शोषयेन्नित्यं स्वकं चैव कलेवरम् ।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ॥
प्रावृष्याकाशशायी च नक्ताशी च सदा भवेत् ।
चतुर्थकालिको वा स्यात् षष्ठकालिक एव वा ॥
कृच्छ्रैर्वाऽपि नयेत्कालं ब्रह्मचर्यं च धारयेत् ।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत् ॥ इति,

इति संक्षेपतो वानप्रस्थधर्मनिरूपणम् ।

अथ प्रसङ्गतो धार्त्तिकवृत्त्यादिचतुर्विधभेदभिन्नानां गृहस्थानां साधारणधर्माः । तत्राह याज्ञवल्क्यः—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥

आवश्यकीं शरीरचिन्तां दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । इत्याद्युक्तविधिना निर्वर्त्य गन्धलेपक्षयकरमित्यादिनोक्तेन विधिना कृतशौचविधिर्द्विजः दन्तधावनपूर्वकं प्रातःसन्ध्यामुपासीत । दन्तधावनकाष्ठादिविधिश्च ।

कण्टकक्षीरवृक्षोत्थं द्वादशाङ्गुलसंमितम् ।
कनिष्ठिकावद्वत् स्थूलं पर्वार्द्धकृतकूर्चकम् ॥
दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा । इति,

अत्र वृक्षोत्थमित्युक्त्या तृणलोष्ठाङ्गुल्यादिनिषेधः फलति, ततश्च रोगित्वावस्थया वा दन्तेषु अदृढिमानमुपेयिवत्सु औषधप्रयोगार्थमङ्गुलिप्रयोगो न दोषाय दन्तशुद्धिविषया त्वनुष्ठीयमानोऽङ्गुल्यादियोगः प्रत्यवायाय भवतीति, पलाशाश्वत्थादिकाष्ठनिषेधश्च स्मृत्यन्तरोक्तो वेदितव्यः ।

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ! ॥

इति दन्तधावनमन्त्रः । प्रातःसन्ध्यामनुष्ठाय आहवनीयादीनग्नीन् यथोदितविधिना समुपास्य किं कुर्यादित्याह याज्ञवल्क्यः—

हुत्वाऽग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥

उदुत्यं जातवेदसमित्यादीन् सूर्यदैवत्यान् मन्त्रान् समाहितचित्तेन जपेत्, तदनन्तरं पूर्वोत्तरकाण्डभेदभिन्नमीमांसादिद्वारा

स्मृतियुक्तिनिरुक्तादिसाहाय्येन च वेदार्थान् ऐहिकामुष्मिकाद्यर्थसाधनभूतानारभ्य अध्यात्माधिगमसाधनपर्यन्तान् जानीयात् । शास्त्राणि विविधानि चेति चकारोऽनुक्तसमुच्चयार्थो यथाऽधिकारं सर्वेषामेव क्षत्रिय–वैश्यादीनां स्वाधिकाराविरोधेन शस्त्रास्त्रशिल्पवाणिज्यविविधयन्त्रकलानृत्यगीतवादित्रादिरूपैहिकार्थबोधकशास्त्राभ्यासं बोधयति, अत एव त्विह विविधानि चेति वैविध्यमभिहितम् । प्रायो धर्मशास्त्रेषु ब्राह्मणप्रामुख्येण धर्मादेशादाह योगीश्वरः–

उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये ।
स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥

अयमर्थः–गृहस्थो ब्राह्मणश्चेदभिषेकादिगुणयुक्तं क्षत्रियं राजानमन्यं वा यथासम्भवं कञ्चनेश्वरं धनिकं वा निर्वाहार्थमुपेयात्–क्षत्रियादिस्तु स्वस्ववर्णानुसारेण निर्वाहोपायमालम्बेत । अवेपेयादित्युक्त्या आगन्तुकोपाधिनिबन्धनसान्निध्याभिधानेन नियतोपाधिकवेतननिमित्तकसेवनं प्रत्याख्याति, सेवायाः श्ववृत्तित्वेन न श्ववृत्त्या कदाचनेति द्विजमात्रस्य सेवावृत्तेरनौचित्यात् ।

ततो मध्याह्ने शास्त्रोक्तविधिना यथासम्भवं महानद्यादिरूपाशयादिषु स्नात्वा ऋग्यजुःसामसूक्तैर्देवान् स्वकुलेऽभ्यर्च्यत्वेनाभिमतान् हरिहरादीन् पितॄन्, चकारेण ऋषींश्च तर्पयेदर्चयेद् यथायथम्, अत्र पूजाऽनुक्रमो ग्रन्थान्तरादवगन्तव्यः । तदनन्तरं कार्यमाह ।

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥
बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ।
भूतपितृामरब्रह्ममनुष्याणां महामखाः ॥

बलिकर्म भूतयज्ञः, स्वधा पितृयज्ञः, होमो देवयज्ञः, स्वाध्यायो ब्रह्मयज्ञः, अतिथिसत्क्रिया मनुष्ययज्ञः, एते पञ्च महायज्ञा द्विजानामावश्यका नित्यत्वात् । क्वचित्कमेषां फलश्रवणं तु पावनत्वबुद्धातिशयाधानाय, न तु फलाख्यानाय तेन नैषां काम्यत्वम् । तत्रैव विशेषमाह—

देवेभ्यश्च हुतादन्नाच्छेशाद् भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥

स्वगृह्योक्तविधिना वैश्वदेवहोमं कृत्वा तदवशिष्टान्नेन भूतेभ्यो बलिं हरेत् । अन्नान्नमित्युक्तिरदनीयमुपस्थापयतीत्यपक्वं व्युदस्यते । तदनन्तरं यथाशक्ति भूमावन्नं श्वचाण्डालवायसेभ्यो निक्षिपेत् । चशब्दः कृमिपापिरोगिपतितसमुच्चायकः । यथाऽऽहमनुः ।

शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निर्वपेद् भुवि ॥ इति,

अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादित्याश्वलायनस्मरणेन प्रातस्तनपाकादिव सायन्तनपाकादपि बलिवैश्वदेवं कुर्यात् । गृहस्थस्य कर्तव्यान्तरं चाह योगीश्वरः—

अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥

प्रत्यहमन्नं पितृभ्यो मनुष्येभ्यश्च यथाशक्ति देयम् । अन्नाभावे कन्दमूलफलादि । तस्याप्यभावे जलं देयम् । स्वाध्यायोमन्त्रब्राह्मणात्मकोवेदस्‍ यथाशक्ति अधीयीत येनाधीतविस्मरणं न स्यादन्यथाऽधीतविस्मरणे प्रायश्चित्ती स्यात्, न चान्नं स्वहेतोःपचेत्किन्तु देवतोद्देशेन यथाह स्मृतिः न पचेदन्नमात्मार्थम् । भगवा-

नपि गीतासु भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् इति, ।
गृहस्थस्य शेषभोजनम् ।

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

स्ववासिनी या परिणीता सती पितृगेहे वसति सा । अव-
शिष्टं निगदव्याख्यातम् ।

आपोशनेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥

इदं च द्विजत्वनिबन्धनमिति उपनयनप्रभृति सर्वाश्रमसा-
धारणम् ।

अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥

प्रातःकाले इव सायंकालेऽपि अतिथिरप्रणोद्यः अप्रत्या-
ख्येयः । तथा चाह मनुः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ॥
भोजयेदागतान् काले सखिसंबन्धिबान्धवान् ॥

भिक्षा च ग्राससम्मिता, ग्रासश्च मयूराण्डपरिमाणः ।
शातातपश्चाह ।

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम् ।
हन्तास्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥ इति,

बलिकर्म भूतयज्ञः, स्वधा पितृयज्ञ, होमो देवयज्ञ, स्वाध्यायो ब्रह्मयज्ञ, अतिथिसत्क्रिया मनुष्ययज्ञ, एते पञ्च महा यज्ञा द्विजानामावश्यका नित्यत्वात् । क्वाचित्कमेषां फलश्रवणं तु पावनत्वरुचुत्पतिश्रद्धाधानाय, न तु फलाख्यानाय तेन नैषां काम्यत्वम् । तत्रैव विशेषमाह—

देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ॥

स्वगृह्योक्तविधिना वैश्वदेवहोमं कृत्वा तदवशिष्टान्नेन भूतेभ्यो बलिं हरेत् । अन्नमित्युक्तिरदनीयमुपस्थापयतीत्यपक्व व्युदस्यते । तदनन्तरं यथाशक्ति भूमावन्नं श्वचाण्डालवायसेभ्यो निक्षिपेत् । चशब्दः कृमिपापिरोगिपतितसमुच्चायकः । यथाऽऽहमनुः ।

शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निक्षिपेद् भुवि ॥ इति,

अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादित्याश्वलायनस्मरणेन प्रातस्तनपाकादिव सायन्तनपाकादपि बलिवैश्वदेवं कुर्यात् । गृहस्थस्य कर्तव्यान्तरं चाह योगीश्वरः —

अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ।
स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥

प्रत्यहमन्नं पितृभ्यो मनुष्येभ्यश्च यथाशक्ति देयम् । अन्नाभावे कन्दमूलफलादि । तस्याप्यभावे जलं देयम् । स्वाध्यायोमन्त्रब्राह्मणात्मकोवेदस्तं यथाशक्ति अधीयीत येनाधीतविस्मरणं न स्यादन्यथाऽधीतविस्मरणे प्रायश्चित्ती स्यात्, न चान्नं स्वहेतोः पचेत्किन्तु देवतोद्देशेन यथाह स्मृतिः न पचेदन्नमात्मार्थम् । मनवा

नपि गीतासु भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् इति, ।

गृहस्थस्य शेषभोजनम् ।

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

स्ववासिनी या परिणीता सती पितृगेहे वसति सा । अव-

शिष्टं निगदव्याख्यातम् ।

आपोशनेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥

इदं च द्विजत्वनिबन्धनमिति उपनयनप्रभृति सर्वाश्रमसा-

धारणम् ।

अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः ।
अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ॥

प्रातःकाले इव सायंकालेऽपि अतिथिरप्रणोद्यः अप्रत्या-

ख्येयः । तथा चाह मनुः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।
सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ॥
भोजयेदागतान् काले सखिसंबन्धिबान्धवान् ॥

भिक्षा च ग्राससम्मिता, ग्रासश्च मयूराण्डपरिमाणः ।

शातातपश्चाह ।

ग्रासमात्रा भवेद् भिक्षा पुष्कलं तच्चतुर्गुणम् ।
हन्तस्तु तैश्चतुर्भिः स्यादग्रं तत्त्रिगुणं भवेत् ॥ इति,

प्रतिसंवत्सरमर्चनीयानाह योगीश्वरः ।

प्रतिसंवत्सरं त्वर्घ्याः स्नातकाचार्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥

स्नातको विद्यास्नातकः, व्रतस्नातकः, विद्याव्रतस्नातकः, आचार्यः पार्थिवो राजा प्रियो मित्रं विवाह्यो जामाता । चकारः श्वशुरपितृव्यमातुलादीनां संग्राहकः । यथा सस्माराश्वलायनः ।

ऋत्विजो वृत्वा मधुपर्कमाहरेत् । स्नातकोपस्थिताय राज्ञे आचार्याय च श्वशुरपितृव्यमातुलानां च ॥ इति,

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥
परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।
वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥
अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेत् ।
अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥
उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ संविशेत् ॥
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥
विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति ॥
वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् ।
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः ॥

इदानीं वर्णविशेषे गृहस्थधर्मानाह ।

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥

प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ॥
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग् भवेत् ।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन् ॥
भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत् ॥
सर्ववर्णाश्रमसाधारणधर्मांश्चाह योगीश्वरः ।
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥
वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् ।
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥

भारते भीष्मः ।

अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।
प्रजनं स्वेषु दारेषु शौचमद्रोह एव च ॥
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ।

व्यासः ।

धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते चिरं तत्र न संवसेत् ॥

मार्कण्डेयपुराणे ।

जितामित्रो नृपो यत्र बलवान् धर्मतत्परः ।
तत्र नित्यं वसेत्प्राज्ञः कुतः कुनृपतौ सुखम् ॥
यस्मिन् कृषीवला राष्ट्रे प्रायशो नातिभोगिनः ।
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः ॥

प्रीयमाणो नरो यत्र प्रयच्छेद् गुह्यवचितम् ।
सुस्थचित्तो वसेतत्र कृतकृत्य इवात्मवान् ॥
दण्डो यथाविनीतेषु सत्कारश्च कृतात्मसु ।
वसेतत्र वसेन्नैत्र धर्मशीलेषु साधुषु ॥

विष्णुः ।

वर्षातपादिषु च्छत्री दण्डी रात्र्यटवीषु च ।
शरीररक्षणकामो वै सोपानत्कः सदा व्रजेत् ॥
नाधो न तिर्यगूर्द्ध्वं वा निरीक्षन् पर्यटेद् बुधः ।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥
न दुष्टं यानमारोहेद् भग्नच्छायां न संश्रयेत् ।
नैकः सुप्याद्वनं गच्छेन्न तु शून्यगृहे वसेत् ॥
नासहायो व्रजेद्रात्रौ नोत्पथेन चतुष्पथे ।

बृहस्पतिः ।

सख्यं समाधिकैः कुर्यादुपेयादीश्वरं सदा ।
वैरं निर्हेतुकं वादं न कुर्यात्केनचित्सह ॥

वसिष्ठः ।

आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्याः ।
वाग्बुद्धिगुणानि वयस्तथैव धनायुषी गुप्ततमे च कार्ये ॥

पैठीनसिः ।

अनिन्द्या ब्राह्मणा गावः सलिलं काञ्चनं स्त्रियः ।
पृथिवी च षडेतानि यो निन्दति स निन्दितः ॥

मार्कण्डेयपुराणे ।

वेददेवद्विजातीनां साधुसत्यतपस्विनाम् ।
गुरोः पतिव्रतायाश्च तथा यज्ञतपस्विनाम् ॥

परिवादं न कुर्वीत परिहासेऽपि पुत्रकाः ! ।
कुर्वतामविनीतानां श्रोतव्यं न कथञ्चन ॥

हारीतः ।

विवादं वर्जयेद्विप्रे सर्वेषां चैव सूचनम् ।
परिभोगं यथोक्तेषु मत्सरं पुत्रशिष्ययोः ॥

तथा च परत्र ।

तस्मान्नैव परिवदेद्यजन्तं याज्यमीश्वरम् ।
आदत्ते सुकृतं तेषां ये वै परिवदन्ति तम् ॥

मनुः ।

ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ॥
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥
न च वाचं वदेद् दुष्टां न दीनां न च कर्कशाम् ।

योगीश्वरः ।

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च ॥

मनुः ।

मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥
उद्वर्तनमपस्नानं विण्मूत्रे रक्तमेव च ।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ॥
वैरिणं नोपसेवेत सहायं चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् ॥

समसूसुचत्, मामिति पदेन सदादिपदनिर्देश्यावतारिस्वरूपसंपन्नमखिलाविकलषाड्गुण्ययुतमवतारं मामित्यर्थविवक्षा । एकमित्यनेन देवतान्तरव्यावृत्तिस्तेषां जीवकोटिनिविष्टतया स्वयं तरितुमक्षम इति न्यायेनाशरण्यत्वात्, अत एव यजन्त्यविधिपूर्वकमिति मुमुक्षोर्देवतान्तरयोगस्याविधत्वमाह । अहं त्वामित्युक्तिश्च अविशेषप्रविभिन्नानन्तात्मव्यक्तिबुबोधयिषया, मोक्षयिष्यामीति च एष एव साधु कर्म कारयतीति श्रुत्यर्थोपबृंहणमत एव ददामि बुद्धियोगं तं येन मामुपयान्ति ते । इति स्पष्टमाचष्टे स्वयम् । एतेन संसार-तन्निवृत्त्योस्सत्यत्वमपि सिध्यति । जात-जायमान-जनिष्यमाणानिष्टसम्भावनाजन्यो मानसो वृत्तिविशेषः शोकस्तदननुरूपत्वयाऽत्र मा शुच इति, भगवदर्पितानां भ्रष्टबीजकल्पकर्मणां नाङ्कुरकरणकल्पतेति कृतं शोककलिलेनेति विवक्षितोऽर्थः । ततश्च भक्तिरूपापन्नज्ञानं मोक्षमुख्योपाय इति सिध्यति, अत एव ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥

इति चानपुरःसरीं भक्तिं पुरश्चकार भगवान् । गीताशास्त्रस्य चेदमेव गुह्यतममुपदेष्टव्यं सारस्वरूपमत एवेह ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥

इति प्रतिज्ञाय भक्तिः परमोपाय इत्युपदिदेश, गीतासु भक्तेरेवोपायमात्रस्य भगवता भूयमभिहितत्वाद् भूय इति, एतेनाथ शास्त्रे भक्तिरेवाभिहितेति न शक्यविहितं प्रविहितचेतसाम् ।

- ये पुनरनुवयः कर्मनैरपेक्ष्येण ज्ञानमात्रान्मोक्षमामनन्तो मोक्षमनस्य परमर्षमतनिराकरणाय यदृच्छावाग्जालमुपाददाना उदा-